# मधुपर्कपर्यालोचनम्

संस्कृतव्याख्यया समलङ्कृतो देवभद्रकृतः

## अथर्ववेदीयमधुपर्कप्रयोगः

एवञ्च

## पाश्चात्यवेदविदां परम्पराविमर्शः






लेखकः

**डॉ० श्रीकिशोरमिश्रः**

प्राध्यापकः

संस्कृतविभागः

काशीहिन्दूविश्वविद्यालयः

वाराणसी

# MADHUPARKA-PARYĀLOĆANAM

with the original Sanskrit commentary on

ATHARVAVEDĪYA MADHUPARKA PRAYOGA

and

a detailed account of

Western Vedic Scholars




*by*


**Dr. SHREE KISHORE MISHRA**

***Lecturer***

Department of Sanskrit

Banaras Hindu University

Varanasi

# भूमिकाभागः

## मङ्गलम्

१

गणपतिमीशं करुणावरुणालयमन्तरायपूगहरम्
श्रीश्यामं भगवन्तं भवभयखेदच्छिदं वन्दे

२

यस्माच्चातुर्वर्ण्यं चत्वारश्चाश्रमास्त्रयो लोकाः
सिद्धयन्ति यज्ञपुंस्वाः कालत्रितयं नमोऽस्तु वेदाय

३

करुणार्पितं महेच्छं बुधजनहृद्यं सुचन्द्रकान्तं तम्
युगलं सदा किशोरं गौरीनाथं परं शिवं वन्दे

४

भगवत्प्रसादपादान् गोपालचन्द्रमिश्रार्यचरणाँश्च
श्रुतिसायुज्यमवाप्तान् सततं वन्देऽस्मदीयगुरुवर्यान्

५

शास्त्रोक्तवादान् प्रतिपद्य तेषां
समन्वयायैष कृतः प्रयत्नः
असाधु यत्, तत्र स नः प्रमादो
यत् साधु, सर्वः स गुरुप्रसादः

६

भूमौ स्खलितपादानां भूमिरेवावलम्बनम्
श्रुते जातापराधानां त्वमेव शरणं श्रुते !

—लेखकस्य

# संस्तवः

काशीहिन्दूविश्वविद्यालयस्य संस्कृतविभागे विदुषा प्रवक्त्रा डॉ० श्रीकिशोरमिश्रेण प्रणीतमदो मधुपर्कपर्यालोचनशीर्षकं ग्रन्थरत्नम्। अस्य ग्रन्थस्य मुख्यस्यारम्भात्पूर्वमेव प्रायः पञ्चाशत्पृष्ठात्मिकानुशीलनजुष्टा पर्यालोचनपीठिका विद्यते। तत्रानेकविचारपक्षाः सुविवेचिताः। यथा चामुष्मिकी ऐहिकी हिंसा, हिंसापदार्थविचारः, शान्तिकपौष्टिककर्मविवेकः, अथर्ववेदशाखानां सपरिचयसप्रमाणनिरूपणम्, तस्य वेदस्य नवशाखानां च परिचय इत्यादयो विषयास्तत्र सम्यक् प्रमाणपुरस्सरं निर्दिष्टाः सन्ति। बहूनि तथ्यानि मया पूर्वपीठिकाध्ययनेनावगतानि। तदनन्तरं चास्मिन् किल पीठिकाभागे वैदिकवाङ्मये कृतभूरिश्रमाणां पाश्चात्यविदुषां प्रायोऽष्टाविंशत्युत्तरशतसंख्याकानां संक्षिप्तपरिचयमुपन्यस्य तत्राध्ययनाभिलाषुकाणां कृते लेखकः महोपकारं विदधाति।

तदनन्तरं मुख्यो ग्रन्थो मधुपर्कपर्यालोचनात्मको वर्तते। तत्र बहवः सम्बद्धपक्षाः सुष्ठु प्रमाणोपन्यासपुरस्सरं विवेचिताः। मधुपर्कशब्दार्थं समधिकृत्य मधुपर्कार्हणस्य वैदिकमूलम्, मधुपर्कार्हणस्य दृष्टादृष्टफलकत्वम्, तस्य कालः, अर्हणीयविचारः, इत्यादयो विषयाः पर्यालोचिताः सन्ति। नानागृह्यसूत्रोक्तवचनानां गभीरतयावगाहनपूर्वकं मधुपर्कस्य मुख्यविवेच्यसन्दर्भस्य नानापक्षाः सम्यक् समीक्षिताः। अत्र कौशिकगृह्यसूत्रोक्तिमनुसरता लेखकेन नव भेदाः ब्राह्मैन्द्रसौम्यप्रभृतयो द्रव्यपात्रादिनिरूपणपुरस्सरं सुनिरूपिताः। तदग्रे च पारस्कराश्वलायनबोधायनापस्तम्बगोभिलगृह्यसूत्राण्याश्रित्य एकवृद्-द्विवृत्-त्रिवृच्चतुर्वृत्-पाङ्क्तमधुपर्काः, तेषां भेदाश्च तुलनात्मकसमीक्षणसहिता व्याख्याताः।

प्रसङ्गतः इदमत्रावधेयम् यतोऽयं ग्रन्थोऽथर्ववेदीयकल्पाश्रितोऽत्र विवेचने सर्वत्राथर्ववेदीयकल्पस्य वैशिष्टयं परिलक्ष्यते। तत्रान्यो न कश्चिद्धेतुरथर्ववेदीयकल्पप्रसङ्गानामस्मिन् पर्यालोचने। अत्र देवपूजायां मधुपर्कविशेषाः, द्रव्यालाभे प्रतिनिधिसूचनम्, पात्राणि, भक्षणमित्यादयोऽपि समीक्षिताः।

एकमपरमप्यत्र वैशिष्टयम्। देवभद्रकृतस्य अद्यावध्यप्रकाशितस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनग्रन्थागारे समुपलब्धस्य

पृष्ठत्रयात्मकस्य लघुग्रन्थस्य पीयूषकणिकानाम्नी विस्तृतटीकापि श्रीकिशोर-मिश्रेण महता विवेकेन निर्मिता। अत्रोपसंहारोऽपि महत्त्वपूर्ण इति पाठकैः सुधीभिः स्वयमेवोह्यः। अस्मिन् ग्रन्थे बहूनि वैशिष्ट्यानि विद्यन्ते, तेषु कानिचन यथा—

(क) मधुपर्कमात्रविषयमधिकृत्येतः पूर्वं नैतादृशः ग्रन्थ उपलभ्यते।

(ख) अथर्ववेदीयमधुपर्कमात्रविषयमवलम्ब्य अथर्ववेदोक्तविधान-सूचिका कृतिरपि विरलैव।

(ग) शाखाभेदपरका नाना पक्षा अत्र सङ्कलिताः सन्ति।

अतो लघुकायस्यापि महत्त्वजुष्टस्यास्य ग्रन्थस्य लेखनेन डॉ० श्रीकिशोरमिश्राः नूनं साधुवादार्हाः। साशीर्वादं कामयेऽहं यद् भविष्यति कालेऽनेन किशोरेण डॉ० श्रीकिशोरमिश्रेण महत्त्वपूर्णानां ग्रन्थानां निर्माणं भविष्यति।

**करुणापतित्रिपाठी**
कुलपतिचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसेयस्य
अध्यक्षश्च
उत्तरप्रदेशसंस्कृतअकादमीसंस्थायाः
लखनऊनगरस्थायाः

श्रीहरिप्रबोधिनी एकादशी
२०४५ वैक्रमाब्दे

# शुभाशंसनम्

अस्मत्स्नेहभाजनेन श्रीकिशोरमिश्रेण वेदाचार्येण प्रणीतं मधुपर्क-पर्यालोचनाख्यं ग्रन्थं दृष्टवतां मोमुद्यते नोऽन्तःकरणम्। अत्र मूलग्रन्थभागे रचयित्रा मधुपर्कशब्दार्थं प्रकृत्य मधुपर्कार्हणस्य वैदिकमूलम्, दृष्टादृष्ट-फलकत्वम्, अर्थवैशिष्टयम्, इत्येते विचाराः केचनादृष्टचराः साधु निरूपिताः। मधुपर्ककाल-पात्र-भेदादयोऽपि गृह्यसूत्रवाङ्मयसमालोडनेन समाधिगता विषया नवनीतसमा एवात्र संराजन्ते। विशेषतो विरलपरम्प-रस्याथर्ववेदीयकर्मकलापस्य प्रकाशाय ग्रन्थकृता भूयान् श्रमो विहितः। तदीयक्रमे वाराणसेये सरस्वतीभवनग्रन्थागारे समुपलब्धस्याद्यावध्यप्रका-शितस्य देवभद्रग्रथितस्याथर्ववेदीयमधुपर्कप्रयोगस्य लघुकलेवरस्यापि सुवितता मधुपर्कोपयुक्तमन्त्रपदार्थादिबोधिनी विचारसंवलितात्र संकलिता ग्रन्थकृत्कृता पीयूषकणिकाख्या व्याख्या।

मधुपर्कमात्रविषयमाश्रित्य नैवंविधो ग्रन्थः पूर्वं निबद्ध इत्यस्यास्ति कश्चनादृष्टो विशेषः। ग्रन्थारम्भे वैदिकशोधपरिचायनपरः पाश्चात्त्यविद्व-त्परम्पराप्रकाशकः पीठिकाभागोऽवसाने विविधगृह्यसूत्रविशेषनिदर्शनक्षमः सूच्यादिसमलङ्कृतः परिशिष्टभागश्चेत्युभौ ग्रन्थस्य दार्ढ्यमाविष्कुरुतः।

तदेतस्य भारतीयार्षपरम्परायां निबन्धग्रन्थविधया विरचितस्य मधुपर्कपर्यालोचनाभिधस्य ग्रन्थस्य तद्ग्रन्थकर्तुश्च शुभाभिवर्द्धनं वयं सामोदं कामयामहे।

श्रीगौरीनाथशास्त्री

पूर्वकुलपतिः

दिनाङ्कः २।१२।८८ वाराणसेयसंस्कृतविश्वविद्यालयस्य

# प्रस्तावना

श्रीवेदपुरुषस्यानुग्रहेण वेदाध्ययनमालायाम् अथर्ववेदीयमधुपर्क-प्रयोगरूपमपरं कुसुमं सङ्ग्रथनन्तः परमानन्दमनुभवामः। अथर्ववेदीय-मधुपर्कप्रयोगस्य पत्रत्रयपरिमिता मातृका सरस्वतीभवनग्रन्थागारे ४०३९६ प्रवेशसंख्यया (आगमसंख्यया) ११२ क्रमसंख्यया च वर्तते। ग्रन्थकारस्य नाम देवभद्र इति। कस्मिन्काले प्रयोगग्रन्थस्यास्य रचना जातेति न स्फुटम्। परं विषयदृष्ट्या वैदिकस्य मधुपर्कस्याऽऽसीत् भारतीय-संस्कृतौ समाजे च महत्त्वमित्यत्र न सन्देहलेशावसरः। साम्प्रतिकेऽपि काले विवाहादौ मधुपर्कप्रयोगः समनुष्ठीयत एव। किम्बहुना दैनन्दिनव्यवहारेऽपि विशिष्टजनसमागमनवेलायां भारतीयैः श्रद्धाप्रकाशनार्थं यत्किञ्चिदनुष्ठीयते तत्सर्वं वैदिकमधुपर्कप्रयोगस्यैवावदानमनुशिक्षणञ्च। अतश्च विश्वसंस्कृतौ वैदिकमधुपर्कप्रयोगस्य प्रभावः सुतरां वर्तत इत्यपि वक्तुं सुकरम्।

मधुपर्को हि नाम अभ्यर्हितस्य गृह्यसूत्रोक्तविधिना समर्चनम्। ते चाभ्यर्हिताः पारस्करगृह्यसूत्रे षडुक्ताः—आचार्यः, ऋत्विक्, वैवाह्यः, (वरः), राजा, प्रियः (मित्रम्), स्नातक इति। अर्चनीयो हि पुरुषः अर्घ्य इति याज्ञिकभाषायामुच्यते। अर्चकश्च यजमान इति, दाता इति वा सूत्रेषु व्यवहृतः। मधुपर्कार्चनमिदं वेदस्य चरणभेदेन भिद्यते, यदि चरणमनु-सृत्य गृह्यसूत्ररचनास्ति। कतिचन गृह्यसूत्राणि शाखामवलम्ब्य प्रवृत्तानि। तत्र शाखाभेदेन मधुपर्कार्चनप्रयोगो भिद्यते। मधुपर्कार्चनस्य अत्यन्तमस्ति महत्त्वं धर्मशास्त्रदृष्ट्या। गृहीतमधुपर्को हि ऋत्विक् स्वकुटुम्बे स्वसपिण्डेषु वा जननमरणाशौचप्राप्तौ यस्मिन् कर्मणि तेन मधुपर्को गृहीतस्तस्मिन् कर्मणि आन्तं यावदशुचित्वप्रयुक्तमनधिकारित्वं नाप्नोति। यद्यपि स्मार्त-सूत्रप्रतिपादितमिदं कर्म, तथापि श्रौतेषु सोमयागादिष्वस्य याज्ञिकाः सूत्र-काराश्चानिवार्यतां घोषयन्ति—'कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः' इति हि पारस्करसूत्रे (१।३।३१) श्रुतिवचनमुद्धृतम्। श्रुतिवचनो-द्धरणादपि मधुपर्कस्य माहात्म्यं, श्रौतस्य सोमयागादेः कर्माङ्गत्वमिव च प्रकाश्यते।

प्रतिचरणं प्रतिशाखं वा भिन्नमिदं मधुपर्कार्चनं पूज्यस्य शाखया करणीयमिति बहुसम्मतः पक्षः। दातुः शाखया करणीयमिति केषाञ्चन

पक्षः। दातारोऽपि भारते स्वपितृपितामहपरिगृहीतभेदेन भिन्नशाखीया भवन्त्येवेति समेषामपि सूत्रविधीनामादरो भवत्येव।

माध्यन्दिनीयाः, कृष्णयाजुषाः, ऋग्वेदिनः, सामवेदिनश्च सन्ति बहवः। परं पैतृकपरम्परया स्वात्मानमथर्वशाखीयत्वेन ख्यापयन्तः समस्तेऽपि भारतवर्षे केचन अङ्गुलिपरिगणनीयाः परिवाराः स्युः। सन्तोऽपि ते कर्मविधानविज्ञानामनुपलब्धेः स्वकर्माणि प्रायशो नाथर्ववेदेन समनुतिष्ठन्ति। मधुपर्कार्चनं हि सम्प्रत्यपि रुद्रयज्ञ-विष्णुयज्ञादिप्रचलितेषु व्यावहारिकेषु यागेषु प्रचलति। तेषु यागेषु अर्च्यशाखया, आथर्वणिककर्मविनियुक्तस्य ऋत्विजः अथर्वशाखाविधिना वा मधुपर्कार्चनं वाञ्छन्तोऽपि यायजूका यजमानाः पुरोधसश्च न अथर्वमधुपर्कप्रयोगं जानते। अत्र हि प्रयोगे बहवो विशेषाः सन्ति। तत्र कतिपये यथा—

१. सूत्रोक्तमन्त्राणामपि ऋषिच्छन्दोदैवतस्मरणम्।

२. यद्यपि सूत्रव्याख्यापद्धतिकृद्भिर्मधुपर्कस्य त्रैविध्यं न प्रतिपादितम्, परं सूत्रानुशीलनेन अर्च्यस्य सदाचारभेदेन मधुपर्कत्रैविध्यं भाति। तच्च— (क) गोरुत्सर्गपक्षः (ख) अन्नग्रहणविधया मधुपर्कगव्यर्चासम्पादनम्। अयमन्नाहारपक्षः। (ग) सामिषाशित्वे पललादिसंग्रहणम्, अयमुपासकपक्षः।

३. अन्यशाखासु सूत्रेषु प्रायशः एकेन खण्डेन कण्डिकया वा मधुपर्कविधानमत्र तु कण्डिकात्रयेण कौशिकसूत्रस्य पूर्णेन द्वादशाध्यायेन सप्तसप्ततिसूत्रैर्विधानमुपदिष्टम्।

४. सर्वत्र मधुपर्कस्य त्रिःप्राशनम्। अत्र तु द्वादशकृत्वो मधुपर्कप्राशनम्, तत्रैकादशसु मन्त्रभेदेन प्राशनम्।

५. मधुपर्कश्चात्र नवविधः, द्रव्यभेदेन नवविधत्वम्। केषाञ्चन द्रव्याणां मधुपर्को राजसूये सौत्रामण्यां च नियतः।

एवमादीनि वैशिष्ट्यानि सन्त्याथर्वणमधुपर्कप्रयोगे।

अथर्ववेदीयमधुपर्कप्रयोगस्य प्रकाशनप्रस्तावः १९७४-७५ वर्ष एव पूर्ववेदविभागाध्यक्षैः डा० गोपालचन्द्रमिश्रमहोदयैरादिष्ट आसीत्। ततः डा०श्रीकिशोरमिश्रेण सुसम्पाद्य १९८३ वर्षे सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य लघुग्रन्थप्रकाशनयोजनार्थमयं ग्रन्थः प्रस्तुतः। परं ततः प्रकाशनविलम्बे सति ग्रन्थोऽयमुत्तरप्रदेशसंस्कृताकादमीसंस्थायाः साहाय्येन प्रकाश्यत इति ग्रन्थप्रणेता संस्कृतअकादमीसंस्था च साधुवादमर्हतः।

प्रस्तुतेऽस्मिन्संस्करणे विदुषा लेखकेन बहु वैशिष्ट्याधानं कृतमस्ति । तेषु प्रथमतस्तावद्वैदेशिकवैदिकविदुषां परिचयात्मकः पीठिकाभागो विद्यते, यत्र वैदिकसाहित्ये कृतभूरिपरिश्रमाणां सुकृतिनां विदुषां सामान्यपरिचयः वैदिकसाहित्यपरिचयविमर्शपुरस्सरं निबद्धः। मन्ये तदिदं वेदविद्यार्णवावगाहनतत्पराणामध्येतॄणां कृते नितान्तं हृद्यं प्रेरणास्पदं च कल्पेत । मधुपर्कपर्यालोचनाख्ये ग्रन्थभागे मधुपर्कशब्दार्थं प्रकृत्य मधुपर्कार्हणस्य वैदिकमूलम्, मधुपर्कार्हणस्य दृष्टादृष्टफलकत्वम्, कौशिकगृह्यसूत्रोक्ताः ब्राह्मैन्द्र-सौम्य-पौष्ण-सारस्वत-मौसल-वारुण-श्रावण - पारिव्राजकनामधेयाः नव मधुपर्कभेदाः, आश्वलायन-पारस्कर-बौधायनापस्तम्ब-गोभिलगृह्यसूत्राण्याश्रित्य एकवृद्-द्विवृत्-त्रिवृच्-चतुर्वृत्-पाङ्क्तमधुपर्काः, तुलनात्मकविमर्शसहिताः, तेषां भेदाः, देवपूजायां मधुपर्कविशेषाः, द्रव्यालाभे प्रतिनिधयः, पात्राणि, भक्षणम्, इत्येवमादयो विषयाः नैपुण्येनाध्यवसायेन समालोचिताः। तदनु देवभद्रकृतस्य अप्रकाशितस्य सरस्वतीभवनग्रन्थागारे प्राप्तस्य अथर्ववेदीयमधुपर्कप्रयोगस्य पीयूषकणिकानाम्नी सुविशदा व्याख्या मधुपर्कोपयुक्तमन्त्रपदार्थादिसंवलिता कृता, यया लेखकस्य मौलिकचिन्तनशक्तिः स्फीतेन विधिना समुद्भासिता भवति । परिशिष्टे तु विविधगृह्योक्तमधुपर्कसूत्रपाठः, अथर्ववेदीयमधुपर्कमन्त्रसूची, पाश्चात्यवेदविदुषां तिथिक्रमश्च संयोजिताः सन्तो ग्रन्थस्यास्य महिमानं वर्द्धन्तेतमाम् ।

मधुपर्कमात्रविषयमुररीकृत्य इदम्प्रथमतया विमर्शपूर्वकं ग्रन्थनिबन्धनात्, शाखावैभिन्येन सकलविचारप्रतिपादनात्, पूर्वपीठिकायां पाश्चात्यवैदिकविदुषां जीवनसर्वस्वपरिचायनाच्च अपूर्वं ग्रन्थरत्नमिदमिति निश्चिनुमः। नूनमेतेन विदुषा लेखकेन भगवत्याः श्रुतेः साधीयसी वरिवस्या समनुष्ठितेति सानन्दमभिनन्दयामो लेखकं डा०श्रीकिशोरमिश्रं समेधयामो मङ्गलानुशंसनैश्च ।

**युगलकिशोरमिश्रः**

आचार्योऽध्यक्षश्च-वेदविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

# विषयानुक्रमः

—०—

श्रीः

# पर्यालोचनपीठिका

गणपतिमीशं करुणावरुणालयमन्तरायपूगहरम् ।
श्रीश्यामं भगवन्तं भवभयखेदच्छिदं वन्दे ।।

आविर्भूय कुतश्चिदादिविदुषः सुप्तप्रबुद्धादिवो-
द्वेलन्तो वसुधासुधाशनमुखे कल्लोलकोलाहलैः ।
व्यासेनोन्मथितामृताः स्वहृदयोद्बुद्धाशयोपस्कृताः
श्रेयःशेवधयोऽभितोऽनवधयो वेदाब्धयः पान्तु माम् ।।

परमेश्वरस्य वेदपुरुषस्य वाङ्मयमूर्त्तेश्चतुर्द्धा ऋग्यजुस्सामाथर्वरूपेण प्रकाशः। तत्राप्यस्माभिर्व्याख्यातो ग्रन्थोऽथर्ववेदीयकल्पाश्रित इत्यथर्ववेद-परिचयं प्रकृत्य वेदविद्वत्परम्परान्तो विमर्शः पीठिकायां प्रस्तूयते ।

**अथर्ववेदः**

चतुर्षु वेदेषु चरमां कोटिमादधानोऽथर्ववेदः सुविदित एव समेषाम् । वेदविशेषणत्वेन प्रयुज्यमानोऽथर्वशब्दः ऋग्यजुस्सामपदवन्न मन्त्रलक्षणपरः । निघण्टुग्रन्थेऽनुपलभ्यमानोऽपि थुर्वीधातुः पाणिनीयधातुपाठे भ्वादौ हिंसार्थकः परस्मैपदी पठ्यते ।[1] वैदिकशब्दानां परोक्षवृत्तिसाधर्म्येण थुर्वी-धातुरेव थर्वतया परिणतः। ततश्चाध्वर्युशब्दो यथा निरुक्तकृता[2]—"ध्वर-तिर्हिंसाकर्मा तत्प्रतिषेधः" इत्येवं निरुक्तस्तथैवाथर्वशब्देऽपि—न भवति थर्वः हिंसा यस्मादिति निर्वचनं कर्तुं युज्यते । हिंसा त्वत्रामुष्मिकी ऐहिकी चेति द्विविधैवाभिप्रेता ।

वैदिके श्रौते वाङ्मये प्राणवियोगानुकूलव्यापार एव हिंसा नास्ति, कृष्णाजिनस्यास्तरणे पृथिव्याः संज्ञानार्थके मन्त्रपाठे "नेदन्योन्यं हिनसाते" इत्यत्र ब्राह्मणे[3] हेतुदर्शने उभयोरपि पृथिवीकृष्णाजिनयोः अदृश्याचेतनयोः प्राणवियोगानुकूलव्यापारस्याप्रवेशेऽपि हन्तेः प्रयोगदर्शनात् । एवञ्च

१. पा० धा० ५७१

२. नि० १।८।१

३. श० ब्रा० १।१।४।५

स्वस्वरूपच्युति: फलक्षमताविरहसाधकत्वं वा हिंसेति फलति। ततश्च या ऐहिकी हिंसाथर्ववेदेनापाक्रियते सा स्ववाञ्छितफलविरहसाधकसाधनापाकरणरूपा स्वगतन्यूनतापरिहारिणी चेति द्विविधा।

आमुष्मिकी हिंसा नाम फलभोगानुकूलशरीरजनितकर्मनिमित्तकपारलौकिकसुखविनाशकसाधनोत्पत्तिः। सैषा आमुष्मिकी हिंसाप्यथर्ववेदोक्तेन कर्मगणेन विनिवर्तत इति वेदस्यास्याथर्वत्वमन्वर्थतामेति।

या चेयमैहिकी हिंसा, तस्या विनिवर्त्तका उपायाः शान्तिकपौष्टिकशब्दाभ्यां व्यवह्रियन्ते। अत एव 'अस्पष्टपापनिदानकमैहिकमात्रानिष्टनिवर्तकं पापाप्रयोजकं वैधं कर्म शान्तिकम्', "स्वस्वीयाभिवृद्धिफलकं वैधं कर्म पौष्टिकम्" इत्येवं याज्ञिका लक्षयन्ति। लक्षणे क्षयकासादिरोगहरदानादावतिव्याप्तिवारणाय अस्पष्टपापनिदानकमितिविशेषणम्, रोगाभिव्यक्तपापनिदानस्य स्पष्टत्वात्। आमुष्मिकानिष्टनिवर्त्तकेषु प्रायश्चित्तादिकर्मस्वतिप्रसङ्गं वारयितुमैहिकपदम्। प्रायश्चित्तस्य व्यावहारिकतासाधकत्वादामुष्मिकानिष्टनिवर्तकत्वाच्च द्विरुक्ततया तत्रातिप्रवृत्तिं वारयितुं मात्रपदम्। अभिचारप्रत्यभिचारादेः फलतो हिंसात्वेन तदनुष्ठाने प्रायश्चित्तोक्तेश्च शान्तिकलक्षणे पापाप्रयोजकत्वनिर्देशः। शान्तिकस्य विनिवर्तकत्वञ्च अस्पष्टनिदानपापनाशनरूपसामग्रीसंघटकत्वेन। एवञ्च शान्तिकर्माण्यथर्ववेदीयानि सिद्ध्यन्ति। एवमेव स्वगतन्यूनतापाकरणरूपत्वाच्च पुष्टिकर्माणि अथर्ववेदप्रतिपाद्यानि भवन्ति। पुष्टिफलकोपायास्तु दान-व्रत-मणिधारण-क्षुद्रक्षुल्लकानुष्ठान-( यातुटोनकादि )-रूपा बहुविधा अथर्ववेदप्रतिपाद्या वेदविषयतयैव समनुगुणा भवन्ति।

इष्टापूर्तयोरप्यथर्ववेदप्रतिपाद्यत्वमेव। इष्टापूर्त्तलक्षणं तु अपरिज्यानिसंज्ञकहोमविधायिनि ब्राह्मणे सायणार्य एवमुदाजहार[1]—

वर्णाश्रमान्वयी धर्म इष्टं, पूर्तमथेतरत्।
प्रपातटाकादिरूपं तच्च सर्वत्र दृश्यते।
स्मार्तं पूर्तं श्रौतमिष्टमिति केचिदिहोचिरे॥ इति।

**अथर्वशाखाः**

चिरादियं प्रसिद्धिर्यदथर्ववेदस्य नव शाखाः। परं कास्ताः शाखाः, किन्नामधेयाः, कस्तत्र चरणादिभेदः, कानि च तदुपोद्बलकप्रमाणानि,

१. ऐ० ब्रा० ३४।३

इत्येवमूहापोहोऽथर्ववेदाध्यायिनां भवति। तज्जिज्ञासोपशमायात्राथर्वशाखाविषयको विचार उपस्थाप्यते।

अथर्वशाखाविचारे मुख्यतया चतुर्विधा आधाराः —

१. चरणव्यूहपरिशिष्टम्। तत्रैकं शुक्लयजुषां पञ्चमं कात्यायनोक्तमपरञ्चाथर्वणिकानामेकोनपंचाशत्संख्याकं परिशिष्टम्। परिशिष्टद्वयमप्यथर्वशाखाः परिचाययति।

२. आथर्वणिकवाङ्मये परिशिष्टसूत्रकल्पादिषु मतादिप्रदर्शनमुखेनोल्लिखिताः शाखाः।

३. पाणिनिमहाभाष्यकृदादिभिराचार्यैर्यथाप्रसङ्गं संकेतितानि शाखासम्बन्धीनि तथ्यानि।

४. पुराणेषु यत्र तत्रोक्ता वेदशाखाविचारास्तदनुगुणाश्च संस्कारगणपत्यादिलेखाः। इति।

अथर्वशाखासंख्यानविषये पाश्चात्यमनीषिभिरपि सुबहु परिश्राम्यद्भिः यथामति विचाराः प्रस्तुताः। परं तेष्वपि राथमहोदयमतमत्रालोचनीयं प्रतिभाति। राथवर्येण काश्मीरेषूपलब्धस्याथर्ववेदस्य विवेचनप्रसंगे (२४ पृष्ठे) प्रतिपादितं यदथर्ववेदस्य पञ्चैव शाखाः पूर्वमासन्। यतो हि तासामेव प्रामाणिकं विवरणमुपलभ्यते। चतस्रोऽवशिष्टास्तु शाखाः न प्रामाणिकोल्लेखं धारयन्तीत्युपेक्षणीयाः। परमिदं मतमविचारितरमणीयमेव। यतो ह्यथर्वशाखानां सार्वत्रिकसंस्कृतवाङ्मये एकविधक्रमेणैकस्वरेण वा मुख्यतयोपलब्धिकामना न न्याय्या। व्याकरणपुराणादिषु विषयान्तरप्रसंगेनैव शाखाभिधानोल्लेखो दृश्यते, न तु मुख्यतया। स चोल्लेखः शाखानामधेयनिर्णये सहायको भवति, न तु प्रतिपादकः। तत्प्रतिपादकवाक्यानि तु चरणव्यूहादिशाखैकपरिचायनपरग्रन्थोक्तान्येव। अथ चाथर्वणिकवाङ्मये सूत्रपरिशिष्टादिषु यः शाखोल्लेखः सोऽप्यथर्वशाखाविषये नूनं प्रामाणिकः। अतः मुख्यतया एतदाधारेण, पुराणादिसहकारेण च शाखानिर्णयः कर्त्तव्यो न त्वन्यथा। राथमहोदयस्य विचारसरणिः समीक्षणप्रणाली च नैतादृशी।

वस्तुतस्तु नवाथर्वणिकशाखाश्चरणव्यूहादिषु सनामग्राहं सुस्फुटमुक्ताः, अन्यत्र चाथर्वणिकवाङ्मये निर्दिष्टाः। वयमप्यत्र सर्वविधोल्लेखसमन्वयपुरस्सरं मुख्यतयाथर्वणिकग्रन्थादिसमीक्षणद्वारेण अथर्ववेदशाखाविषयं विमृशामः।

अथापि वेदानुशीलने कृतभूरिपरिश्रमः पाश्चात्त्योऽपि राथमनीषी एतद्विषये दिक्प्रवर्तक इति सादरं साधुवादार्हः। अन्येऽपि वैदेशिका मनीषिणः अथर्वशाखाप्रसङ्गं साधु समालोचितवन्तः। यथा—

१. वेदवरः इन्दिशेस्तूदियनादिपुस्तकेषु ( Weber : Indiche Studian, I. 152, III. 277-278, XIII. 434–35 Omina and Portenta, p. 412-413, Indiche Literaturgeschichta, p. 171 )

२. मोक्षमूलरभट्टः प्राचीनसंस्कृतसाहित्यग्रन्थे ( Max Muller : Ancient Sanskrit Literature p. 371.)

३. पुष्पक्षेत्रो रामः J. A. O. S. पुस्तके ( Maurice Bloomfield : J. A. O. S. xi. p. 377-378 ) इत्यादि।

आथर्वणिकस्यैकोनपञ्चाशत्तमचरणव्यूहपरिशिष्टस्य प्रामाणिकहस्तलेखानुशीलनेन अथर्वशाखानामपाठ एवंविधो दृश्यते—

तत्र ब्रह्मवेदस्य नव भेदा भवन्ति, तद् यथा, पिप्पलास्तौदा मौदाः शौनकीया जाजला जलदा ब्रह्मवदा देवदर्शाश्चारणवैद्याश्च। इति।

अत्र स्फुटमेवाथर्ववेदस्य नव सम्प्रदायाः शाखारूपाः परिगणिताः। अन्यत्र पुस्तकेषु एतदपभ्रष्टाः किंचित्परिवर्तिताश्च पाठा दृश्यन्ते लेखकपाठकमुद्रकसम्पादकादिप्रमादमूलाः। तेऽपि प्रायशः एतानि नामान्येवानुकुर्वन्ति। अथ प्रत्येकं शाखाया विवरणं प्रस्तूयते।

### १. पैप्पलादशाखा

अस्या एव शाखायाः पैप्पलादक-पैप्पलादि-पैप्पल्लाद-पैप्पल-पिप्पल-पैप्पलायनादीनि नामान्तराण्यपि दृश्यन्ते। सर्वाण्यप्येतानि पिप्पलादाख्यं स्वप्रवचनकर्त्तारमृषिं द्योतयन्तीति नातितिरोहितम्। ब्लूमफील्डवर्यस्तु पिप्पलादिनामकमाचार्यं वक्तीति तद् भ्रममूलकं मुद्रणाशुद्धिमूलकं वा।

काश्मीरेषूपलब्धस्याथर्ववेदीयमन्त्रभागस्य पाण्डुलिपिषु काण्डान्तपुष्पिकायाम् 'आथर्वणिकपैप्पलादशाखा' इत्येवमुल्लेखो वर्तते। प्रथमाथर्वपरिशिष्टोपसंहृतावपि कश्चन मन्त्रगणः काश्मीरोपलब्धशाखाया एवेति राथमहोदयस्य मतम्। स चायं मन्त्रगणः 'अथर्ववेदस्य सप्त सूक्तानि' ( Seven

Hymns of the Atharvaveda ) इति शीर्षकेण प्रकाशितोऽपि ।[1] सेयं पैप्पलादसंहिता न पूर्णा समुपलब्धा । आदौ मध्ये चास्याः मूलग्रन्थस्त्रुटितो वर्तते । अस्य ग्रन्थस्य संस्करणं रोमनलिप्यां पूर्वं प्रकाशितमभूत् । दुर्गामोहनभट्टाचार्येणाप्यस्याः शाखायाः कश्चिदपरो हस्तलेखोऽधिगतः । अधुना कलिंगेष्वपि अस्याः शाखायाः हस्तलेखाः सम्प्राप्ताः इति श्रूयते । एतत्पुस्तकं यथोपलब्धि आचार्यरघुवीरमहोदयेन सम्पादितं प्रकाशितं च वर्तते । गोपथब्राह्मणे पातञ्जलमहाभाष्ये च 'शन्नो देवीः' इतिमन्त्रेणाथर्ववेदस्य प्रारम्भः निर्दिष्टोऽस्ति । परं न शौनकीयसंहितायाः अयमाद्यो मन्त्रः । अथर्वपरिशिष्टोक्तः पैप्पलादशान्तिगणः[2] शन्नो देवीः इति मन्त्रेण प्रारभ्यते[3] । अतश्चापीदं दृढतरमनुमातुं शक्यते यदयं शन्नो देवीरिति मन्त्रः पैप्पलादसंहितायाः आद्य इति ।

पाणिनीये कार्तकौजपादिगणे पिप्पलादप्रवर्तितेयं शाखा 'मौदपैप्पलादाः' इत्येवं निर्दिष्टा । महाभाष्ये, शुक्लयजुषां चरणव्यूहपरिशिष्टे, पुराणेषु चास्याः शाखायाः समुल्लेखः । प्रश्नोपनिषदवसानपुष्पिकायामपि "इति श्रीपिप्पलादाथर्वणे शाखायां प्रश्नोपनिषत् समाप्ता" इत्येवं कुत्रचिदुल्लेखो दृश्यते । वैतानसूत्रोत्तरार्द्धे प्रायश्चित्तविधानप्रतिपादके अष्टमाध्यायान्ते, "श्रीमद्गुरु-आथर्वणाचार्यपिप्पलादशंयुमाथर्वणाय नमः.....श्रीमद्गुरु-आथर्वणाचार्यपिप्पलायन समाप्तोऽयम्" इत्येवं निर्देशः । एवं हि प्रश्नोपनिषदः पैप्पलादशाखीयत्वं वैतानसूत्रस्य च पैप्पलादशाखोपकारकत्वमपि विचारपथमायाति ।

इदंकाले तु नास्याः शाखाया अध्ययनाध्यापनपरम्परा दृश्यते । ये केचन पैप्पलादशाखीयत्वेनात्मानं ख्यापयन्ति विरलास्तेऽपि न पारम्पर्याध्ययने गृहीतदीक्षाः । अथापि पूर्ववाङ्मयानुशीलनेनेदं स्पष्टं भवति यत् पैप्पलादशाखा शन्नो देवीरिति मन्त्रेण प्रारब्धा पूर्वं बहुप्रचारा आसीदिति ।

## २. तौदशाखा

कतिपयहस्तलेखेष्वियं स्तौदनाम्नापि पठिता, यथा पैप्पलादाः स्तौदा इति । परमत्र लेखकप्रमादेन सन्धिभ्रमः स्पष्ट एवेति तौदाः इत्येवं शुद्धः

---

१. American Journal of Philology : p. 487--488.

२. ३४।२० ; द्र० कौ० ९।३

३. द्र० अ० परि० २।३, २।६, २३।१०, २४।१४, २४।४१

पाठो मन्तव्यः। चरणव्यूहलेखेषु इयं शाखा तौदायनाभिधानेन ( लेखकप्रमादात् स्तौदायनरूपेण ) अप्युक्ता। अथर्वपरिशिष्टेषु 'आ स्कम्भादुरसो वापीति तौदायनैः स्मृता' इत्येवमस्याः शाखाया उल्लेखः[१]। आथर्वणिकवाङ्मये अयमेवोल्लेखः तौदशाखायाः, न त्वन्यत्र दृष्टः। अस्याः शाखाया नाम बहुत्र ग्रन्थेषु बहुविधपाठात्मकं दृश्यते। यथा तौत इति शब्दकल्पद्रुमे, तौत्तायन-तोत्तायनीयेति द्विधा शुक्लयाजुषे चरणव्यूहपरिशिष्टे, भूतायनाः इति देवीपुराणे च।

## ३. मौदशाखा

अस्याः शाखायाः आथर्वणिकवाङ्मये सर्वप्रथममुल्लेखः अथर्वपरिशिष्टेषु[२] दृश्यते। अथर्वपरिशिष्टे एवमुक्तिः—

पैप्पलादं गुरुं कुर्यात् श्रीराष्ट्रारोग्यवर्द्धनम्।
तथा शौनकिनं चापि देवमन्त्रविपश्चितम्॥.........

पुरोधा जलदो यस्य मौदो वा स्यात्कथंचन।
अब्दाद् दशभ्यो मासेभ्यो राष्ट्रभ्रंशं स गच्छति॥ इति[३]।

इत्थं हि जलदमौदशाखाविज्ञयोर्न राष्ट्ररक्षायै गुरुत्वेन तथाविध उपयोगो दर्शितो यादृशः पैप्पलादशौनकिशाखीययोरित्याशयः। यत्तु बलदेवोपाध्यायादयो विचारकाः[४] अथर्वपरिशिष्टोक्तिमिमां पुरस्कृत्य मौदजलदशाखयोर्हीनतां कल्पयन्ति, तदयुक्तम्। अत्र, राज्ञा पैप्पलादशौनकान्यतरशाखीयो गुरुः कर्तव्य इत्ययं विधिः राष्ट्रभ्रंशाद्यर्थवादेन स्तुतः। न चास्यार्थवादात्मकवाक्यस्य स्वार्थे तात्पर्यम्। साधारणजनस्य कृते तु पैप्पलादादिशाखावदेव मौदादेरप्युपयोगोऽभ्युपगन्तव्यः तत्प्रतिषेधकवाक्यानुपलम्भात्।

अथर्वपरिशिष्टेष्वेव मौदायननामोल्लेखोऽपि वर्तते[५]। स तु पैप्पलायन-तौदायन-जलदायनादिवत् मौदशाखाया एव बोधकः। पाणिनिर्गणकृन्महाभाष्यकृच्च मौदशाखां पैप्पलादसमां बोधयतः[६]। शुक्लयाजुषपरिशिष्टरूपेषु चरणव्यूहहस्तलेखेषु बहुत्र दामोदा इत्येवमुल्लेखः अपपाठरूपः अस्या एव शाखाया मन्तव्यः। तत्राद्यो दावर्णः पूर्वोक्तपैप्पलादापदस्यान्त्यो लेखकप्रमादात् परपदे निविष्ट इति स्पष्ट एवापपाठः।

---

१. अ० परि० २३।३
२. अ० परि० २।४,२३।३
३. अ० परि० २।४
४. वैदिकसाहित्य और संस्कृति पृ० १६८
५. अ० परि० २४।१०
६. द्र० कार्तकौजपादिगणे पाणिनीये

## ४. शौनकशाखा

इयं शौनकी शौनकीया वापि शाखा कथ्यते। कौशिकसूत्रे शौनकिनामित्येवं सम्प्रदायविशेषोक्तिः[१]। वैतानश्रौतसूत्रे 'शौनकयज्ञोऽभिचारकामस्य' इत्थमभिचारे शौनकिनां विशेषाभिनिवेशो द्योतितः[२]। कौशिकगृह्यसूत्रानुसारिण्यामथर्वपद्धतौ[३] शौनकीयसूत्रत्वेन वैतानसूत्रस्य निर्देशः। अथर्वप्रातिशाख्यरूपा चतुरध्यायिकापि शौनकीया उच्यते। अथर्वपरिशिष्टेषु शौनकशाखाध्येतारः शौनकीयाः उक्ताः[४]। अथर्वपरिशिष्टेषु बहुत्रास्याः शाखायाः प्रवर्तकः शौनक आचार्य उक्तः, परमेकत्र शौनकी अपि वर्तते[५]। मन्येऽयमपपाठः। पाणिनिना शौनकादिभ्यश्छन्दसि[६] इत्यत्र गणपाठे शौनकादिगणे देवदर्शनोल्लेखः कृतः। कौशिकगृह्येऽपि देवदर्शिनां ततश्च शौनकिनां मतोल्लेखः[७]। अतः शौनकदेवदर्शशाखयोः कश्चन विशिष्टः सम्बन्धः स्मर्तव्यः। वैदिकवाङ्मये बहुत्र शौनकशाखायाः नाम भ्रष्टपाठापपाठपाठभेदैर्निष्टम्। तत्र कौनखिनः कुनखिन इति वा य उल्लेखः स शौनकिनः इत्यस्यैव वर्णविपर्ययादिद्वारेण सम्भूत इति ब्लूमफील्डविदुषो मतम्। वयं तु शौनकीयानामाभिचारिके कर्मणि वैशिष्ट्यात् कुनखिनः ( दुर्घातकाः ) इत्येवं तेषां प्रसिद्धिरियं गुणपरेति विचारयामः।

अस्याः शाखायाः भ्रष्टनामपाठाः कौनकीयाः ( अ० परि० ४९ ) शकुनखी इत्यादयः शकारककारयोर्वैपरीत्येनोत्पन्नाः। सेयं विपरीततान्यत्रापि शाखानामसु लोपाश-लोपाक-शर्कोटक-कर्कोटकादिषु च दृश्यते। परं न कुनखिनः शाखान्तरानुयायिनो वक्तुं शक्यन्ते।

सेयं शौनकिशाखा विंशतिकाण्डात्मिका सम्प्रत्यध्यनाध्यापने समादृता वर्तते। यद्यप्येतस्याः स्वशाखीयाध्येतारो न सन्ति। अथापि वेदान्तरीयाः अध्येतार एव इमां पठनपाठनेन प्रचारयन्ति। सायणार्येणाप्यस्यां शाखायां भाष्यमारचितमिति अर्थाध्यापनेऽपि अस्याः संहिताया एव प्रसिद्धिः। सायणार्येणाथर्वभाष्योपोद्घाते कौशिकगृह्यसूत्रं शौनकादिशाखाचतुष्टयोपकारकमुल्लिखितम्। शंकरपण्डितस्तु एताश्चतस्रः शाखाः, शौनकीया

---

१. कौ० ८५।८ २. वै० ४३।२५; ३. १।६
४. अ० परि० २४।१० ५. अ० परि० १।४
६. ४।३।१०६ ७. कौ० ८५।७-८

जाजला ( अकसाला ) जलदा ब्रह्मवदा च, इत्थं मनुते[1]। अयमेवोल्लेखः अथर्वपद्धत्यादिष्वपि दृश्यते।

**५. जाजलशाखा**

अस्याः शाखाया उल्लेखः अथर्वपरिशिष्टे एवमस्ति—'बाहूमात्रा देवदर्शैर्जाजलैरूरुमात्रिका' इति[2]। महाभाष्ये इयं शाखा जाजलिना आचार्येण प्रवर्तितेति भावो दर्शितः। शङ्करपण्डितस्तु अकसालेति शाखाभिधानं जाजलापभ्रष्टं मनुते। जाजलशाखेयं सम्भवतः अथर्ववैदिकग्रन्थेषु बहुत्र जाबालेति नामभेदेनोक्ता। अथर्वपरिशिष्टेष्वप्येवंविधः पाठ उपलभ्यते[3]। अत एवेदमनुमातुं शक्यते यदिदं जाजलनामधेयं प्रसिद्धस्य वैदिकर्षेः जाबालस्यैव पर्यायान्तरम्। केचन विद्वांसः आथर्वणिकग्रन्थेषु बहुत्रोक्तस्य[4] भागलेराचार्यस्य जाजलशाखाप्रवर्त्तकत्वं मन्यन्ते। परमत्र वयं स्फुटप्रमाणानि नोपलभामहे।

**६. जलदशाखा**

इयं शाखापि अथर्वपरिशिष्टेषु अभिहिता[5]। तत्र मौदशाखीयवत् जलदशाखीयस्यापि राज्ञः पौरोहित्येऽनर्हत्वमुक्तम्। अथर्वपरिशिष्टेष्वेव जलदायनपदेनैतच्छाखाध्येतार उपदिष्टाः। यथा—'जलदायनैर्वितस्तिर्वा षोडशेति तु भार्गवैः' इति[6]। शंकरपण्डितानुसारं जलदशाखाया अपि संहिताविध्यपरपर्यायं कौशिकसूत्रमेव गृह्यकर्मप्रतिपादकम्।

**७. ब्रह्मवदशाखा**

अथर्वपरिशिष्टान्तर्गते चरणव्यूहे अस्याः शाखाया उल्लेखः[7]। परमन्यत्र कुत्राप्याथर्वणिकग्रन्थेषु नास्याः स्पष्टमुल्लेखः। अपरत्र वैदिकादिग्रन्थेषु अस्याः नामोल्लेखो दृश्यते, परमस्ति तेषु पाठवैभिन्यम्। अस्याः अपभ्रष्टनामान्तराणि ब्रह्मवल-ब्रह्मबल-ब्रह्मदाबल-ब्रह्मपलाशादीनि अन्यान्यपि च सन्ति।

---

१. Statement at London Academy on June 5, 1880.

२. अ० परि० २३।२    ३. अ० परि० ४९

४. द्र० कौ० ९।१०, १७।२७, वै० सू० १।३, २२।१, २८।१२

५. अ० परि० २।५

६. अ० परि० २३।२    ७. अ० परि० ४९

## ८. देवदर्शशाखा

इयं देवदर्शीतिनाम्नाप्युच्यते। अथर्वपरिशिष्टेषु अरणिप्रमाणप्रसंगे, बाहुमात्रा देवदर्शैरित्येवमस्याः समुल्लेखो जाजलादिशाखान्तरवत् कृतः[1]। कौशिकगृह्ये देवदर्शशाखाध्येतॄणां मतं शौनकवत् समादृतं दृश्यते[2]। पाणिनिनापि शौनकादिगणे देवदर्शनिनः इत्येवमस्याः समुल्लेखः कृतः। अन्यग्रन्थेष्वस्याः शाखाया नामपाठान्तराणि दिवदर्श-देवर्षि-वेददर्शादीन्यप्युपलभ्यन्ते।

## ९. चारणवैद्यशाखा

अस्या एव नामान्तरमभिहितं याजुषचरणव्यूहादिषु चारणविद्या इति। अथर्वपरिशिष्टेषु[3] 'चारणवैद्यैर्जङ्घे च मौदेनाष्टाङ्गुलानि च' इत्थमरणिमानप्रकरणे शाखेयमुक्ता। कौशिकसूत्रस्य भाष्यकृता केशवेनापीयं शाखा षष्ठकण्डिकाव्याख्याने स्मृता[4]।

एवं हि अथर्ववेदस्य शाखाविस्तारो नवधा महाभाष्यादिषूक्तो निरूपितः। तासां शाखानां कुत्र प्रामाणिकः समुल्लेखः इत्ययमपि विषयः प्रदर्शितः। अथापि कस्तत्र चरणविभाग इतिविषये नोपलब्धवाङ्मये कश्चन स्पष्टसङ्केतो दृश्यते। वयं तु सायणार्यस्य शौनकसंहिताभाष्योपक्रमणिकोक्ताधारेण शौनकीयचरणे शौनकीयजाजलजलदब्रह्मवदशाखाः चतस्रः सन्तीति मन्यामहे। यतो हि एतच्छाखाचतुष्टयपरिगृहीतमेकमेव कौशिकगृह्यसूत्रं वर्तते। तथा च सायणोक्तिः—'तत्र शौनकीयादिषु चतसृषु शाखासु अनुवाकसूक्तगर्गादीनां गोपथब्राह्मणानुसारेण पंचभिः सूत्रैर्विनियोगोऽभिहितः', इति। अथर्वपद्धत्यादिष्वपि एवंविधः उल्लेखो वर्तते। अवशिष्टाः पञ्च शाखास्तु पैप्पलादचरणे भवितुमर्हन्ति, प्राचीनग्रन्थेषु पैप्पलादशाखायाः प्रामुख्येणोल्लेखात्। अतः अथर्ववेदस्य चरणद्वयं कल्पयितुं शक्यते। परमत्र चरणकल्पने आथर्वणिकग्रन्थालोडनपरा विचारसरणिरग्रेऽपि काम्यते।

---

१. अ० परि० २३।२ २, कौ० ८५।७
३. अ० परि० २३।२ ४. कौ० ६।३७ भाष्ये

## पाश्चात्त्यवेदविदां परम्पराविमर्शः

वैदिकवाङ्मयालोडने गवेषणे च पाश्चात्त्यमनीषिभिर्बहुशः प्रयतितमिति पूर्वोक्तविमर्शप्रसङ्गे स्फुटमेव। परमेतेषां वैदेशिकमनीषिणां विचारचातुरी भवति कुत्रचिद् बहुविधा, कुत्रचिच्चैकदेशवर्तिनी प्रसङ्गगता। अथ च जर्मन-फ्रांसा-मेरिके-टली-रूसां-ग्लादिदेशेषु मुख्यतः खीष्टवर्षक्रमस्याष्टादशशततमवर्षादारभ्येदानीं यावद् ये विद्वांसो वेदानुसन्धानरतास्तेषां परम्पराभेदः सिद्धान्तभेदश्चापि दृश्यते। तस्य स्फुटावगमार्थं पाश्चात्त्यवेदमनीषिणां कृतिकालक्रमज्ञानमावश्यकम्।

पाश्चात्त्यवेदविदुषामध्यवसायतपसा सम्प्रकाशिता वयं वेदाध्ययनरतास्तेषामुपकारभारं नूनं धारयामः। अतो वैदिकविद्वत्परिचयप्रकाशनगौरवगुणलोलुपा वयमत्र ग्रन्थे पाश्चात्त्यमनीषिणां कृत्यादिपरिचयप्रदर्शनलोभं संवरीतुमशक्नुवन्तो विद्वदग्रेसराणां केषाञ्चन परिचयं प्रस्तुवीमः।

### १. फादर पौस

अयं फ्रान्सदेशीयः खीष्टधर्मप्रचारक आसीत्। अनेन १७४० ईशवीयवर्षे फ्रांसदेशे वेदविषयका लेखाः प्रकाशिताः। तैर्लेखैः वेदानां परिचयप्रसिद्धिर्जाता।

### २. राबर्ट डो नोबिली ( Roberto de Nobilibus )

अयमपि फ्रांसदेशीयो धर्मप्रचारक आसीत्। अनेन 'Ezour Veidam' इतिसञ्ज्ञया कल्पितयजुर्वेदो निर्मितः। अत्र खीस्तधर्मपराः पौराणिक्यश्च कथाः लिखिताः। फ्रेंचभाषानुवादमयस्यास्य कल्पितयजुर्वेदस्य वितथत्वं मोक्षमूलरवर्येण समुद्घोषितम्, अस्य निर्मूलत्वरहस्यञ्च समुद्घाटितम्। कोलब्रुकवर्यस्य लेखेनापि एतदुपकल्पितभ्रमा निरस्ताः।

### ३. वॉलटायर ( Voltaire )

अनेन फ्रांसदेशीयेन विचारकवर्येण 'Morals and the Spirit of the Nations' इतिशीर्षकेण लेखो लिखितः। अत्र भारतीयसंस्कृतेर्महिमा समुद्घुष्टः। अस्य वेदविषयकलेखेन फ्रांसदेशीयविद्वांसः भारतीयविद्याविषये समाकृष्टाः सन्तः सावहितं सोत्कण्ठञ्चाध्ययनार्थं प्रयतितवन्तः।

### ४. फादर कॉलमेट

अयमपि ख्रीस्तधर्मप्रचारक आसीत् । ईशवीयकालस्य अष्टादशशतकावसाने अनेन 'इन्द्रं मित्रम्' इति ऋग्वेदीयमन्त्रमाश्रित्य 'एकं सद् विप्रा बहुधा वदन्ति' इत्थं भारतीयसिद्धान्तः स्वधर्मे प्रचारितः । अनेन पाश्चात्या जनाः प्रतिबोधिता यद् वेदेष्वप्येक एवेश्वरः प्रतिपादित इति ।

### ५. ए. डु पेराँ ( Anquetil du Perron )

अनेन फ्रेंचविदुषा पञ्चाशदुपनिषदां लैटिनभाषायामनुवादः पर्शियनभाषातः कृतः । अयं पर्शियनभाषामयो ग्रन्थः शाहजहाँशासकस्य ज्येष्ठपुत्रेण दाराशिकोहाख्येन निबद्ध इति सम्भाव्यते । डुपेराँमहोदयेन 'ओपनेखत' ( Oupnekhat ) इति नाम्ना अनुवादः सम्पादितः । अयं विद्वान् शुजाउद्दौलाख्यशासकस्य सभायां स्थितेन एम. जेन्टिल ( M. Gentil )-नामकेन फ्रांसदेशीयेन विदुषा संगृहीतस्य, १७७५ ईशवीयाब्दे च एम. बर्नियर ( M. Bernier ) - नामकेन विदुषा फ्रांसदेशे समानीतस्य पर्शियनभाषीयोपनिषत्सङ्ग्रहस्य फ्रेंचभाषायामप्यनुवादं कृतवान् । परं स न प्रकाशितो दृश्यते । लैटिनशब्दानुवादस्तु १८०१ वर्षे प्रकाशितः ।

### ६. हेनरी टॉमस कोलब्रुक ( Sir Henry Thomas Colebrooke)

अयमांग्लदेशीयो विद्वानासीत् । कोलब्रूकवर्यः सप्तदशवर्षात्मके वयसि आंग्लशासनकर्मचारिरूपेण १७८२ वर्षे भारतमागतः । तेन कलिकत्तनपुरस्थस्य सरविलियमजोन्समहोदयस्य प्रेरणया शनैः शनैः संस्कृताध्ययनमेकादशवर्षेषु कृतम् । ततः १७९४ वर्षे जोन्समहोदयस्य देहपातसमये स तस्यैव निर्देशने उत्तराधिकारविषये भारतीयविदुषां संस्कृतग्रन्थस्यानुवादं कुर्वन्नासीत् । जोन्सवर्यानन्तरं कोलब्रूकमहोदयस्तथैव संस्कृतसाहित्यगवेषणे निरतोऽभवत् । जोन्सवर्यस्तु साहित्यप्रेमी आसीत् । कोलब्रूकवर्येण विज्ञानविषयाणामन्वेषणं संस्कृतवाङ्मये कृतम् । धर्म-दर्शन-व्याकरण-गणितादिभारतीयविद्यानां विश्वस्मिन् प्रकाशकः स आसीत् । अनेन विदुषा १८०१ मिते वत्सरे 'हिन्दूनां धार्मिकोत्सवाः' (Religious Ceremonies of the Hindus ) इत्याख्यो निबन्धः प्रकाशितः । ततस्तेनैव सर्वप्रथमं

१८०५ वर्षे 'Essay on the Vedas' इत्याख्ये ग्रन्थे स्वीयवैदिकनिबन्धेषु वेदानां प्रामाणिकी विश्वसनीया पवित्रा च सूचना जगति सर्वत्र प्रकाशिता। अत एवायं सर्वप्रथमो वैदिको विद्वान् पाश्चात्त्येषु मन्तव्यः। १८०५ वर्षे भारतीयानां पवित्रग्रन्थेषु वेदेषु लिखितेऽस्य निबन्धे वैदिकसंहिताब्राह्मणानां वेदाङ्गानामपि च संक्षिप्तपरिचय आसीत्। एतत्कृतवैदिकवाङ्मयपरिचय-प्रबन्धे नव खण्डाः सन्ति। एतेन पाश्चात्त्यविदुषां भारतीयवाङ्मये महदा-कर्षणमभूत्।

अनेन विदुषा एशियाटिकरिसर्चेजपत्रे वैदिकज्ञानपरिचायका निबन्धा लिखिताः। अस्य लेखेन राबर्टडीनोबिलीद्वारा कल्पितयजुर्वेदमुखेन प्रचारिताः भ्रान्तधारणाः खण्डिताः। कोलब्रुकवर्योऽपि पूर्वं संस्कृतविरोधी आसीत्। परं शनैः शनैरयं संस्कृतस्य महान् प्रशंसकः, पाश्चात्त्यदेशेषु संस्कृतस्य, वैदिकज्ञानस्य प्रचारकश्चाभवत्। १७६५ वर्षे लब्धजनिरयं विद्वान् १८३७ वत्सरे दिवङ्गतः।

### ७. फ्रेंज बॉप ( Franz Bopp )

अनेन शार्मण्येन विदुषा स्वीये तुलनात्मकभाषाविज्ञानसम्बन्धि-पुस्तके वेदस्य कतिपयांशानां शर्मण्यभाषामयोऽनुवादः सर्वतःप्रथमं कृतः। स च १८१६ वर्षे प्रकाशितः। अयं तुलनात्मकभाषाविज्ञानस्य प्रतिष्ठापको मन्यते विद्वद्भिः। अस्य धातुप्रक्रियाग्रन्थः तुलनात्मकभाषाविज्ञानप्रति-पादकः १८१६ वर्षे प्रकाशितः। १७९१ वर्षे समुत्पन्नोऽयं १८६७ वर्षे पञ्चत्वं गतः।

### ८. फ्रीड्रिक रोजेन ( Dr. F. Rosen )

अयं बॉपविदुषः शिष्यः शर्मण्यदेशीयो विद्वानासीत्। योरोपमहाद्वीपे सर्वप्रथममनेन विदुषा वेदस्यानुवादार्थं १८३० वर्षे प्रयत्नः कृतः। वेदस्य कियानप्यंशो लैटिनभाषायामनूदितः। सप्तवर्षाणां परिश्रमेण १८३७ ईशवीयवर्षे ऋग्वेदीयप्रथममण्डलस्य १२१ सूक्तानां लैटिनभाषायां शब्दा-नुवादः सम्पादितः। मूलसहितोऽयमनुवादः सायणभाष्याधारेण वर्तते। अस्य विदुषः असामयिकमृत्योरनन्तरं १८३८ ईशवीयवर्षे अयं ग्रन्थः— 'ऋग्वेदसंहिता लीबर प्राइमस संस्कृते एत् लातीने' ( Rigveda Samhita

Liber Primus Sanskrite et Latine ) नाम्ना प्रकाशितोऽभूत्। अयं विद्वान् ब्रिटिशम्यूजियमस्थानं स्वीयज्ञानतपःस्थलमकरोत्।

## ९. यूजेन बर्नूफ ( Eugene Burnouf )

अयं विद्वान् पेरिसनगरे १८०१ तः १८५० ईशवीयवर्षपर्यन्तं फ्रांसमहाविद्यालये वेदविशेषज्ञः प्राध्यापक आसीत्। अनेन सर्वप्रथम फ्रेंचभाषायां वेदानामनुवादप्रयासो विहितः। रोजेनविदुषा कृतस्य ऋक्संहिताव्याख्यानस्याधारेणायं विद्वान् मैक्समूलर-सेंटहिलेयर-लेवी-रॉथ-रेग्नियर-गोल्डस्टुकरप्रभृतीन् बहून् शिष्यान् भारतविद्यामध्यापितवान्। एतस्य शिष्याः श्रेष्ठा विद्वांसः संस्कृतज्ञाः, परवर्त्तिनि काले वेदानुशीलनपराश्चाभवन्।

## १०. जान म्योर ( Dr. John Muir)

अनेन विदुषा 'Original Sanskrit Taxts' नामको ग्रन्थो लन्दननगरे १८५८ वर्षे निबद्धः। अत्र पुरुषसूक्तादिवैदिकमन्त्राणामपि केषाञ्चन पाठभेदानुवादटिप्पण्यादयः प्रदर्शिताः। अस्य ग्रन्थस्य पञ्चमखण्डे 'वैदिकयुगे देवशास्त्र-धर्म-जीवनाचरणादिषु भारतीयानां योगः' इत्ययं विषयः साधु विवेचितः। हिल्लेब्रान्ट-ओल्डेनबर्ग-काएगी-प्रभृतयो विद्वांसो वैदिकधर्मदेवशास्त्रविषयकशोधे म्योरकृतसंग्रहमिमं भृशमुपयोजयन्ति। म्योरविदुषा इन्द्रवरुणादिदेवानां वर्णनं स्वरचितपद्येषु कृतम्। परमय भारतीयधर्मस्य प्रत्याख्यानाय प्रोत्साहनं कृतवानिति विल्सनलेखाज्ज्ञायते। संस्कृतभाषाविदयं विद्वान् १८४४ वत्सरस्य अप्रैलमासादारभ्य १८४५ जनवरीपर्यन्तं काशिकराज्यसंस्कृतपाठशालायां प्रथमाध्यक्षपदमलङ्कुर्वन् संस्कृताध्ययनाध्यापनयो रीतिविशेषं पाठ्यक्रमस्वरूपविशेषञ्च गणित-भूगोलेतिहासहिन्द्यादियुतमिदम्प्रथमतया संस्थापितवान्।

## ११. प्रो. एच. एच. विल्सन ( Horace Hayman Wilson )

अयं विद्वान् सर्वप्रथममाङ्ग्लभाषायां सम्पूर्णस्य ऋग्वेदस्य सायणभाष्यानुरोधेनानुवादं कृतवान्। अस्य प्रथमो भागः १८३० ईशवीयवर्षे मुद्रितः। पट्सु खण्डेषु सम्पूर्णभाष्यस्य मुद्रणं १८८८ वर्षे यावज्जातम्। सायणार्यस्य समर्थकोऽयं वेदानुशीलनपरः फ्रांसमहाविद्यालये ( Institute of France ) प्राध्यापक आसीत्। १८३३ वर्षे ऑक्सफोर्ड- ( Oxford )

विश्वविद्यालये 'Boden Professor of Sanskrit' इति पदमलमकरोत्। मैक्समूलरवर्यः अस्यच्छात्र आसीत्। विलसनमहोदयस्यैका पुस्तिका-'The Religious and Philosophical System of the Hindus' ( भारतीयानां धार्मिकदार्शनिकपद्धतिः ) इत्याख्या अप्यस्ति। अनेन विष्णु-पुराणस्याप्यनुवादः कृतः।

## १२. प्रोफेसर वेसन

अयमांग्लदेशीय आसीत्। अनेन विलसनमहोदयस्य वैदिकशोधकृत्येषु साहाय्यमाचरितम्।

## १३. डा. स्टोवेन्सन ( G. Stevenson )

अनेन विदुषा ऋग्वेदसंहितायाः प्रथममण्डलस्य केषाञ्चन सूक्तानामांग्लभाषायामनुवादः डारोर साहाय्येन १८५० वर्षे कृतः। स च कलिकत्तं-ननगर्यामाभ्यां मुद्रापितः। स्टेवेन्सनमहोदयेन सामवेदस्य राणायनीय-संहिताया आंग्लभाषायामनुवादोऽपि कृतः, स १८४२ वत्सरे प्रकाशितः। अनेन मनीषिणा सानुवादं कल्पसूत्रप्रकाशनमपि कृतम्। वेनफेमहोदयेन सहायं सामवेदं प्रकाशितवान्।

## १४. एडुअर्ड रोएर ( Dr. E. Roer )

अनेन विदुषा 'Bibliotheca Indica' ग्रन्थमालायाम् उपनिषदां सम्पादनं प्रकाशनञ्च कृतम्। अनुवादोऽप्यनेनोपनिषदां कासाञ्चन कृतः। अत्र बृहदारण्यकमप्यस्ति। अयं विद्वान् मैक्समूलरवर्येण भृशं स्मृतः स्वीये इतिहासग्रन्थे। अस्य ग्रन्थः—The Twelve Principal Upanisadas इति नाम्ना विद्यते। ईशोपनिषदनुवादोऽस्य १८५३ वर्षे प्रकाशितः।

## १५. डा. पोले ( Dr. Poley )

अनेन विदुषा बृहदारण्यकस्य सम्पादनं कृतम्। परमस्य काश्चन त्रुटयो मैक्समूलरवर्येण विद्वद्भिश्चान्यैः प्रकटीकृताः। मोक्षमूलरभट्टेनाय-मपि विचारकः सुस्मृतः।

## १६. एस. ए. लांगलोआ ( S. A. Langlois )

अयं फ्रांसदेशीयो विद्वानासीत्। अनेन मनीषिणा सम्पूर्णस्याप्यृग्वेदस्य सर्वप्रथमं फ्रेंचभाषायामनुवादः १८४८-१८५१ वर्षेषु कृतः।

**१७. मैक्समूलर** ( Friedrich Maximillian Muller )

शार्मण्यदेशीयोऽयं विद्वान् इंग्लैंडवास्तव्यः १८२३ खीस्तवत्सरे जनिं लेभे। पाश्चात्त्येषु प्रथितो वेदविद्वानयं बर्नूफविदुषो मुख्यः शिष्य आसीत्। एतेन पञ्चाशद्वर्षात्मकं कर्मजीवनं वेदानामनुशीलने, वैदिकनिबन्धादीनां लेखने च समर्पितम्। एकोनविंशतिशततमे ईशवीये वर्षे स भौतिकं देहमत्यजत्। अयं सायणस्यानुकरणकर्ता आसीत्। अनेन बहवो ग्रन्था लिखिताः सम्पादिताश्च।

अनेन विदुषा सम्पूर्णस्य ऋग्वेदस्य सायणभाष्यं देवनागरलिप्यां सर्वतः प्रथमं मुद्रापितम्। १८४९ वर्षमारभ्य १८७४ वर्षपर्यन्तं २६ वर्षेष्वनेन ग्रन्थोऽयं सम्पादितः। अस्यायं ग्रन्थः प्रायशः सहस्रत्रयपृष्ठात्मकः पञ्चसु भागेषु मुद्रितोऽस्ति। अत्र ग्रन्थे नैकशतपृष्ठात्मिका विद्वन्मनोहरा भूमिका वर्तते। तत्रास्य शार्मण्यविदुषो धीवैदग्ध्यं स्फुटं दृश्यते। ऋग्वेदभाष्यस्य द्वितीयं सुन्दरं संस्करणं संशोधितं पुनः १८९०-९२ वर्षेषु प्रकाशितम्। वेदानुसन्धानार्थमिदं संस्करणमपरिहार्यमस्ति। मैक्समूलरवर्येण ऋग्वेदस्य मूलसंहितापि प्रकाशिता।

अयमृग्वेदप्रातिशाख्यं शार्मण्यभाषायामनूद्य १८५६-६९ वर्षेषु देवनागरीलिप्यां मूलम्, अनुवादेन सह प्रकाशितवान्। "वैदिकपुराणविज्ञानम्" इति नाम्ना अस्यैको ग्रन्थो वैदिकपुराशास्त्रप्रतिपादकोऽस्ति। कात्यायनीया ऋक्सर्वानुक्रमणी अनेन ऑक्सफोर्डविश्वविद्यालयात् १८८६ वर्षे षड्गुरुशिष्यभाष्ययुता प्रकाशिता। बृहद्देवतायाः शौनकोक्ताया आंग्लभाषानुवादोऽप्यनेन समारचितः। अस्य सुप्रथित इतिहासग्रन्थः—History of Ancient Sanskrit Literature (प्राचीनसंस्कृतसाहित्येतिहासः) इत्याख्यः १८५९ वर्षे लन्दननगरात् प्रकाशितः। अयं ग्रन्थो मूलतो वैदिकसाहित्येतिहासमेव सानुसन्धानं बोधयति, अद्यापि च तथैवोपादेयतां शोधार्थिनां कृते साधयति।

अस्यैवाध्यवसायिनो निर्देशने पवित्रप्राच्यग्रन्थमालायां ( Sacred Books of the East Series ) प्रायः पञ्चाशत्खण्डेषु वैदिकानां पौरस्त्यानाञ्चान्येषां ग्रन्थानां प्रकाशनमनुवादादिकञ्च विद्वद्भिर्विहितम्। तत्रापि मैक्समूलरवर्येण वैदिकसूक्तानि – "Vedic Hymns" नाम्ना पवित्रप्राच्यग्रन्थमालायां द्वात्रिंशे षट्चत्वारिंशे चेति द्वयोः पटलयोः ओल्डेनबर्गविदुषः

साहाय्येनांग्लभाषानुवादयुतानि प्रकाशितानि । अथ च मैक्समूलरमहोदयेन 'The Upanisadas' इत्यभिधानेन उपनिषदां सम्पादनं तत्रैव ग्रन्थमालायां प्रथमे पञ्चदशे चेति द्वयोः पटलयोः १८७९ वर्षे कृतम् । एवमेव गृह्यसूत्राणां प्रकाशनं—The Grihya-sutras इति नाम्ना तत्रैव ऊनत्रिंशत्रिंशपटलयोः ओल्डेनबर्गसाहाय्येन कृतम् ।

अनेन विदुषा 'India : what can it teach us' इत्याख्या व्याख्यानसङ्ग्रहपुस्तिका १८८२ वर्षे प्रकाशिता । 'Chips from a German Workshop' इत्याख्या च पुस्तिका प्रणीतानेन ह्विटनेविदुषः आक्षेपनिराकरणाय ।

वेदविद्याविद्योतितान्तःकरणोऽयं विद्वान् भारतीयैर्जनैः मोक्षमूलरभट्टनाम्ना सर्वदा स्मर्यते । भारतप्रशंसकोऽयं मनीषी नागरीलिपिप्रचारकस्तत्प्रतिष्ठापकश्च पाश्चात्त्येषु वर्तते । किंबहुना भारतेऽपि लेखेषु देवनागरीप्रयोगप्राचुर्ये अस्यैव प्रेरणा बीजभूता । भाषाशास्त्रीयविचारा अप्यनेन स्वीयाः १८६१ वर्षे रॉयलइंस्टीटयूटसंयोजितेषु व्याख्यानेषु प्रकटीकृताः । ते च पुस्तकाकृत्या प्रकाशिताः सन्ति । ह्विटनेवर्यस्य भाषासिद्धान्तेषु केषुचिदस्य विमतिरासीत् । अयं मृदुभाषी सरलसरसलेखकः ऑक्सफोर्डविश्वविद्यालये संस्कृताध्यापकत्वेन संस्कृतसेवाञ्चकार ।

## १८. रूडॉल्फ राथ ( Rudolf von Roth )

अयं विद्वान् मोक्षमूलरभट्टस्य सतीर्थ्य आसीत् । परं सायणादिभारतीयाचार्याणां प्रामाण्यविषये अस्य मोक्षमूलराद् वैमत्यमासीत् । अस्येदं मतं यदृग्वेदः स्वयमेव स्वीयं व्याख्यानं प्रस्तौति । अतः सायणो न समाश्रयणीयः । राथमहोदयस्येयं धारणासीद् यत् सायणार्यो बुक्कभूपतेः मन्त्रिपदे नियुक्तः अध्ययनाय कथं समयावकाशादिकं लब्धवान् ? स तु कार्यव्यापृतो यथाकथञ्चिद् वेदभाष्यमकरोत् । तदीयकाले तुलनात्मकभाषाविज्ञानपद्धतेराविष्कारो नासीत् । तदपेक्षया चास्माकं वेदाध्ययनसमयः साधनानि चैतानि वैपुल्येन सन्ति । अतोऽस्मदीयवेदव्याख्यानमधिकतरं प्रामाण्यमादधाति ।

राथमनीषिणो वेदार्थप्रक्रिया यास्काधारेण संस्थिता विलसन-मोक्षमूलराद्यपेक्षया प्रभूततर्कयुक्तियुक्ता विद्यते । अयं शार्मण्यदेशीयो विद्वान् कृत्स्नमपि स्वजीवनं वेदाध्ययन एव यापितवान् ।

अनेन सुबहु परिश्राम्यता १८५२-१८७५ वर्षेषु संस्कृत-शर्मण्यशब्द-कोषस्य निर्माणं कृतम्। कोषस्यास्य निर्माणे बोह्‌तलिकाख्यस्य विदुषः साहाय्यमासीत्। अयं कोषग्रन्थः सेन्टपीटर्सबर्गतः प्रकाशित इत्यस्य नाम 'St. Petersburg Sanskrit Worterbuch' इत्यस्ति। अयं महाग्रन्थः सेन्टपीटर्सबर्गकलाविज्ञानअकादमीसंस्थया सप्तसु खण्डेषु प्रकाशितः। प्रथमखण्डः १८५२ वर्षे, सप्तमश्च १८७५ वर्षे प्राकाश्यमानीतः। अयं प्रायशो दशसहस्रपृष्ठेषु मुद्रितोऽस्ति। अत्र महाग्रन्थे एकैकः शब्दः समस्ते वाङ्मये कुत्र कुत्र कस्मिन् कस्मिन्नर्थे प्रयुक्त इति विवेचितम्।

राथमहोदयः वेदानुशीलने ऐतिहासिकपद्धतेः संस्थापकः। एतद्विर-चितः सेंटपीटर्सबर्गसंस्कृतशर्मण्यमहाकोषः अनयैव पद्धत्या शब्दानामर्थ-विकासं बोधयति। अस्य कोशस्य वैदिकशब्दानामर्थसङ्कलनं राथवर्येण स्वयं कृतम्। लौकिकानां शब्दानां त्वर्थनिर्णयः शर्मण्यदेशीयेनैवान्येन बोर्थलिकनामकेन विदुषा कृतः। अद्याप्यस्य कोशस्य महत्त्वं वैशिष्टयञ्च जागर्ति। शार्मण्यविदुषां संस्कृतप्रेम्णः स्मृतिगिरिरयम्।

राथमहोदयेन १८४६ वत्सरे 'वैदिकसाहित्यमितिहासश्च' इत्याख्या पुस्तिकैका महनीया प्रकाशिता। यया पाश्चात्यविद्वत्सु वेदानुशीलनार्थं दृढा प्रवृत्तिरुत्पन्ना। १८४६ वर्षे पञ्चविंशतिवर्षवयस्केन राथवर्येण विर-चितायाम्, 'Zur Litteratur und Geschichte des Wada' (त्सुर लितरातुर उन्त गेशिस्तँ देस वेद) इत्याख्यायां पुस्तिकायां सर्वप्रथमं वेदानामालोचनात्मकः परिचयो विद्यते। अत्रायं विशेषो यदियं पुस्तिका मुद्रितग्रन्थानां साहाय्येन न विरचिता, अपितु पाण्डुलिपिसङ्कलनेन शोधेन च प्रणीता। तस्मिन् काले वैदिकग्रन्था न मुद्रिता आसन्। अयं ह्विटनेविदुषः साहाय्येन निरुक्तस्य शौनकीयाथर्वसंहितायाश्च सम्पादनमपि १८५०-१८५६ वर्षेषु कृतवान्। अस्यैको ग्रन्थः 'Mit Beitragen' नाम्ना वर्तते। अस्मिन् ऋग्वेदसूक्तानां व्याख्यानमप्यस्ति। अयं ग्रन्थः १८७५ वर्षे Tubingen नगरात् प्रकाशितः।

अनेन वैदिकदेवताप्रतिपादकं 'त्सुर गेशिश्तँ देअर रिलीगिओनन' इत्याख्यं पुस्तकमपि प्रणीतम्। अत्र देवतावादविचारास्तस्य उल्लिखिताः सन्ति। अनेन ब्राह्मणसाहित्यस्य ऋग्वेदतः कालवैषम्यादर्थसाम्यकरणे साहाय्यं नास्तीत्यवधारितम्। अस्य 'Abhandlungen' इत्याख्यः प्रबन्धोऽपि वर्तते।

## १९. ओटो बोह्तलिङ्क ( Otto Bohtlingk )

संस्कृतव्याकरणमनीषी अयं वेदविद्याविचारचातुरीप्रवीणस्य राथवर्यस्य सहयोगी आसीत्। सेन्टपीटर्सबर्गसंस्कृतशर्मण्यमहाकोषस्य निर्माणेऽनेन विदुषा महत् साहाय्यमाचरितम्। अत्र कोशे लौकिकशब्दानामर्थनिर्णयशोधमयमेव कृतवान्। शार्मण्येनानेन विदुषा कोषनिर्माण एव स्वीयं जीवनं प्रायशो यापितम्। १८८९ वर्षे अनेन छान्दोग्योपनिषद्ब्राह्मण प्रकाशितम्। बोथलिंकवर्येण पाणिनिविषये प्रबन्धो लिखितः, यत्र शौनकाद्याचार्याणां वैदिकानां कालनिर्णयादिकं विचारितमस्ति। सेन्टपीटर्सबर्गडिक्शनरीग्रन्थेनायं यशःकायमाप्तवान्।

## २०. वारथेलिसी

अनेन विदुषा १८६०–६१ वर्षयोः वैदिककालविषये समालोचना प्रकाशिता।

## २१. सेंट हिलेयर

अयमपि विद्वान् वैदिककालविचारे गवेषणं कृतवान्। तत्र च वारथेलिसीविदुषः साहाय्यं सम्पादितवान्।

## २२. ए. वेबर ( Albrecht Weber )

शर्मण्यदेशीयोऽयं मनीषी वैदिकविद्वत्सु वेदवरनाम्ना सुप्रथितोऽस्ति। अनेन वेदविषये भूयान् श्रमः कृतः। एतेन वेदविदुषा बहूनां ग्रन्थानां निर्माणं, सम्पादनं, व्याख्यानं, प्रकाशनञ्च कृतम्। अनेन कृष्णयजुर्वेदीया मैत्रायणी सहिता १८४७ वर्षे प्रकाशिता। शुक्लयजुर्वेदस्य वाजसनेयसंहिताया महीधरकृतभाष्यसहितायाः प्रकाशनं १८५२ वर्षे बर्लिननगरात् कृतम्। अथ च काण्वमाध्यन्दिनीयोभयशतपथब्राह्मणं १८५५ वत्सरे बर्लिननगरे इदम्प्रथमतया मुद्रापितम्। पुनः १९२४ वत्सरे तस्यैव हरिस्वामिभाष्यस्य, तत्रत्यबृहदारण्यकस्य च द्विवेदगङ्गटीकासहितस्य प्रकाशनं कृतम्। षड्विंशब्राह्मणस्यान्तिमभागरूपमद्भुतब्राह्मणं स्वकृतशर्मण्यभाषानुवादयुतं १८५८ वर्षे बर्लिननगरात् प्रकाशितम्। शुक्लयजुर्वेदीया काण्वसंहितापि बर्लिननगरात् १८५२ वर्षे प्रकाशिता। कृष्णयजुर्वेदीया तैत्तिरीयसंहिता १८७१-७२ वर्षयोः सम्पादिता वेबरवर्येण। कात्यायनश्रौतसूत्रमपि

कर्कदेवयाज्ञिकयोर्भाष्यांशसंयुतं सुसम्पाद्य १८५९ वत्सरे प्रकाशितम् । वंश-ब्राह्मणमप्यनेन सम्पादितम् । एतत्सम्पादितं वाजसनेयिप्रातिशाख्यमप्यस्ति । वैदिकच्छन्दसां पिङ्गलसूत्राण्यप्येतेन सम्पादितानि । वैदिकज्योतिषपुस्तकस्यापि सम्पादनमनेन कृतम् । एवं ह्ययं साङ्गवेदाध्यायी मन्तव्यः ।

वेबरमहोदयस्य वैदुष्यं सूक्ष्मेक्षिकयानुसन्धानञ्च विदुषामपि विस्मयकरमासीत् । अनेन 'Indische Studien' ( इंदिशे स्तूदियन ) इत्यस्यां भारतीयाध्ययनाख्यायां शर्मण्यदेशीयपत्रिकायां वैदिकानुसन्धान-प्रवर्तका विचाराः प्रकाशिताः, तेन पाश्चात्यदेशेषु वैदिकवाङ्मयस्य सुतरां प्रचारोऽभवत् । इंदिशेस्तूदियनपत्रिकाया अष्टमग्रन्थे अनेन विदुषा वैदिकच्छन्दसां विषये सार्वत्रिकमध्ययनं प्रस्तुतम् । अनेन 'Indian Studies' इत्याख्ये प्रबन्धे उपनिषदां विचारनिरूपणं कृतम् ।

वैदिकसाहित्येतिहासप्रणयनमिदम्प्रथमतया वेबरमहोदयेनैव कृतम् । मूलतया अयमैतिह्यग्रन्थः शर्मण्यभाषायामनेन लिखितः । पश्चाच्चास्यांग्ल-भाषानुवादो लन्दननगरात् ट्रुवनरसंस्कृतसिरीजग्रन्थेषु प्रकाशितः । १८८५ वत्सरे अस्य 'History of Sanskrit Literature' ग्रन्थः प्रकाशितः । भारतीयसाहित्येतिहासविषये अनेन विश्वविद्यालयव्याख्याननाम्ना 'Akademische Vorlesungen Uber Indische Literaturgeschichte' इत्ययं ग्रन्थः प्रणीतः । अयं बर्लिननगरात् १८७६ वर्षे द्वितीयसंस्करणरूपेण प्रकाशितः । तस्य साहाय्यं विन्टरनित्सप्रणीते इतिहासग्रन्थे बहु वर्तते ।

अनेन इन्दिशेस्तूदियनग्रन्थे रामतापिन्यादिवैष्णवोपनिषदः शर्मण्यानुवादसहिताः प्रकाशिताः । आउफ्रेख्तविदुषः साहाय्येनायमथर्व-वेदानुवादं १८५० वत्सरे प्रारब्धवान् । स च भारतीयाध्ययनग्रन्थमालायां ( इन्दिशे स्तूदियन ) बहुषु खण्डेषु प्रकाशितः, परं न पूर्णतामगात् । वेबरविदुषा 'Worterbuch' कोषनिर्माणे राथमहोदयस्यापि साहाय्यमा-चरितम् । अनेन 'Indische Literaturgeschichte' पुस्तके पञ्चशता-धिकसंस्कृतग्रन्थानां सूचना १८५२ वर्षे प्रकाशिता ।

## २३. थ्यूडोर ऑफ्रेख्ट ( Theodor Aufrecht )

अयं शर्मण्यदेशीयो धुरन्धरो विद्वानासीत् । रोजेनराथविद्वद्भ्यां प्रेरितेनानेन मनीषिणा द्वादशवर्षाण्यधीत्यानुसन्धाय च मोक्षमूलरभट्टात् पूर्वमेव सम्पूर्णाप्यृग्वेदसंहिता १८६१–१८६३ वर्षेषु इदम्प्रथमतया

मुद्रापिता। सेयं संहिता रोमनाक्षरेषु वर्तते। अस्य ग्रन्थस्य द्वितीयं संस्करणं १८७७ वर्षे सञ्जातम्। अनेन १८७९ वर्षे सायणभाष्यांशयुत-मैतरेयब्राह्मणमृग्वेदीयमपि प्रकाशितम्। जर्मनदेशे बाननगरतः प्रकाशित-मिदमैतरेयब्राह्मणस्य संस्करणं रोमनाक्षरेषु वर्तते। तच्चात्यन्तं समुपयोगि ऋग्वेदीयमन्त्रानुक्रमणी–टिप्पणी–शब्दकोशादियुतं विशुद्धं संस्करणमस्ति। अथर्वानुवादेऽप्यनेन वेबरविदुषः साहाय्यमारचितम्।

ऑफ्रेख्तविद्वद्धुरीणेन 'Catalogus Catalogorum' (सूची-पत्राणां सूचीग्रन्थः) इत्याख्यो महान् सूचीग्रन्थः प्रणीतः। स च चत्वारिं-शद्वर्षाणां श्रमेण १९०३ वर्षे परिपूरितः। अद्याप्ययं महाग्रन्थः संस्कृत-शोधार्थिनां वेदवेदाङ्गोपाङ्गानुसन्धाननिरतानां समेषां दिक्पथमालोकयन् अस्य विदुषः स्वाध्यायतपोनिर्मितयशःप्रकाशस्तम्भरूपो विराजते। अस्य महाग्रन्थस्य प्रथमखण्डः १८९१ वर्षे Leipzig नगरात् प्रकाशितः।

## २४. मार्टिन हॉग (M. Haug)

अनेन विदुषा ऐतरेयब्राह्मणस्यांग्लभाषानुवादः कृतः। स च १८६३ वर्षे बम्बईनगरात् प्रकाशितः। अस्य संस्करणस्य भूमिका सुविस्तृतातीवो-पयोगिनी च वर्तते। अनेन 'Vedische Ratselfragen und Ratse-lpruche' इत्ययं प्रबन्धो लिखितः, यत्र ऋग्वेदीयप्रथममण्डलस्य १६४ सूक्तस्य व्याख्यानं वर्तते। अस्य 'Brahma und die Brahmanen' इत्याख्यः प्रबन्धः १८७१ वर्षे Munchen नगरात् प्रकाशितः।

## २५. जी. स्वेन्सन

अयं विद्वान् सामवेदीयां राणायनीयशाखासंहितां सर्वप्रथममनूद्य प्रकाशितवान्। अस्य आंग्लभाषानुवादयुतं सामवेदसंहितासंस्करणं १८४२ वर्षे लन्दननगरात् प्रकाशितम्।

## २६. थ्यूडोर बेन्फे (T. Benfey)

अनेन विदुषा सामवेदस्य कौथुमशाखीयसंहितायाः शर्मण्यभाषानुवादः कृतः। स च १८४८ वर्षे लाइपजिग (Leipzig)- नगरात् प्रकाशितः। अत्र सम्पादने स्टेवेन्सनवर्यस्यापि सहयोग आसीत्। अत्र सामवेदसंस्करणे वैदिकशब्दानां संक्षिप्तकोशः अप्यस्ति। स तु कोषग्रन्थपरम्परायां प्रथमः

पाश्चात्त्यप्रयास इति विशेषः। अनेन ऋग्वेदस्य प्रथममण्डलस्य १३० सूक्तानामनुवादोऽपि १८४८ वर्षे प्रकाशितः।

## २७. विलियम डी. ह्विटने ( William Dwight Whitney )

अमेरिकाभिजनोऽयं विद्वान् Yale College संस्थायां प्राध्यापक आसीत्। अनेन विदुषा रूडॉल्फरॉथवैदिकप्रवरेण सह संगत्य १८५६ वर्षे शौनकीयाया अथर्ववेदसंहितायाः प्रकाशनं प्रथमतया विहितम्। अनेन सम्पूर्णस्याप्यथर्ववेदस्यानुवादः सर्वप्रथमं कृत आसीत्। परं स तद्देहपातनन्तरं १९०५ वर्षे लेनमैनविदुषा प्राकाश्यं नीतः। एतत्कृताथर्वानुवादो भूमिकाटिप्पण्यादिभिर्विभूषितः प्रामाणिकश्च वैदिकानां कृते भृशमुपादेयः। अस्याथर्वसंहिताया आंग्लभाषानुवादः समीक्षात्मकव्याकृत्यात्मकव्याख्यानयुतः हॉर्वर्डओरियन्टलसिरीजग्रन्थमालायां सप्तमाष्टमखण्डयोः प्रकाशितः।

वैदिकव्याकरण-भाषाविज्ञानविषयेऽस्य वैदिकवरिष्ठस्य महान् श्रमयोग आसीत्। अनेन तैत्तिरीयप्रातिशाख्यं सम्पादितम्। अथ च चतुरध्यायिकापरपर्यायस्य शौनककृतस्याथर्वप्रातिशाख्यस्य सम्पादनं, व्याख्यानं, प्रकाशनञ्चानेन कृतम्। अथर्वप्रातिशाख्यस्यैतत्कृतमांग्लभाषामयं व्याख्यानं सुविशदमुदाहरणादिपुष्टं तुलनात्मकवैदिकव्याकरणाध्ययनेऽपरिहार्यञ्च भवति।

अस्य 'A Sanskrit Grammar' ( संस्कृतव्याकरणम् ) इत्ययं ग्रन्थः पाश्चात्यविद्वत्सु संस्कृतव्याकरणप्रतिपादकः सर्वप्रथमो मन्यते। इदं व्याकरणं यद्यपि लौकिकसंस्कृतपरमस्ति, तथापि तुलनायै यथायथ वैदिकव्याकरणमप्यत्रोद्धृतम्। अतो वैदिकव्याकरणस्यापि विवेचनेऽस्यापरिहार्यत्वं भवति। अस्य विदुषः 'Oriental and Linguistic Essays' इत्ययं भागद्वयात्मकः प्रबन्धः १८७२ वर्षे न्यूयार्कनगरात् प्रकाशितः। वैदिकभाषाविवेचनपरः 'Language and its study' नामको ग्रन्थः १८६७ वर्षे लन्दन ( London )- नगरात् प्रकाशितोऽस्य।

ह्विटनेमहोदयः, एच०सी०बर्नेल- एच०ओरटेलविदुषोः साहाय्येन १८९७ वर्षे पेरिसनगरात् 'जर्नल ऑफ दि अमेरिकन ओरियन्टल सोसाइटी' पत्रे जैमिनीयब्राह्मणमपि सामवेदीयं प्रकाशितवान्। अस्य विदुषः 'The

Life and Growth of Language' इत्ययं ग्रन्थः १८७५ वर्षे प्रकाशितः। १८३७ वर्षे लब्धजनिरयं विद्वद्धौरेयो भाषाशास्त्रस्य गभीरो विचारकस्तीव्रालोचको मैक्समूलरवर्यान्मितद्वैधं भाषाशास्त्रीयं धारयन् तत्सिद्धान्तखण्डनपरं, मैक्समूलरो भाषाविज्ञानञ्चेति पुस्तकं लिखितवान्। अयं १८९४ वर्षे पञ्चत्वमवाप।

## २८. एम. अडोल्फ रेग्नियर ( M. A. Regnier )

फ्रांसदेशाभिजनोऽयं विद्वान् सायणपक्षधर आसीत्। अनेन विदुषा ऋग्वेदप्रातिशाख्यस्य सम्पादने मोक्षमूलरभट्टस्य साहाय्यमारचितम्। अयं 'Pratisakhya du Rgveda' इत्यभिधानेन शौनकीयमृक्प्रातिशाख्यमिदम्प्रथमतया भागत्रये १८५६-५९ वर्षेषु 'Journal Asiatique' ग्रन्थे प्रकाशितवान्। अनेन १८५५ वत्सर फ्रेञ्चभाषामयस्य 'Etude sur'l idome des Vedas etles oerigenes de la Langue Sanskrite' नाम्नः पुस्तकस्य प्रकाशनं पेरिसनगरात् कृतम्। अत्र ग्रन्थे इदम्प्रथमतया वैदिकभाषाया विवेचनं जातम्।

## २९. हरमन ग्रासमैन ( Hermann Grassmann )

शार्मण्यदेशीयोऽयं विद्वान् राथवर्यस्यान्तेवास्यासीत्। अनेन ऋग्वेदस्य विलसनकृतांग्लभाषानुवादे लांगलोआविरचितफ्रेञ्चभाषानुवादे च सञ्जाते सति शार्मण्यविदुषां प्रतिष्ठासूचकः शर्मण्यभाषायामृग्वेदस्य पद्यानुवादो विरचितः। अस्य पद्यमयोऽनुवादः खण्डद्वये १८७६–१८७७ वर्षयोः प्रकाशितः। राथविदुषः परम्परानुगृहीतत्वादयं न सायणानुरोधी आसीत्। अतः सायणभाष्यमुपेक्ष्यैवानेनानुवादो विहितः।

अनेन विदुषा ऋग्वेदमाश्रित्य वैदिककोषग्रन्थोऽपि 'वॉर्तरबुख त्सुम ऋग्वेद' इतिनाम्ना संस्कृतशर्मण्यभाषयोः १८७३-७५ वर्षेषु सम्पादितः प्रकाशितश्च। एतत्कृते ऋग्वेदकोषे प्रतिस्थलं मूलोक्तिसमुल्लेखपुरस्सरं शब्दार्थनिर्णयः कृतः। ऋग्वेदीयानुवादेषु सञ्जातास्त्रुटयोऽप्यनेन कोशग्रन्थेन यथायथं परिपूर्यन्ते। अयं ग्रासमैनविद्वान् गणितज्ञ आसीत्, श्रद्धयैवानेन वेदाध्ययनं कृतमिति विशेषः। अनेन भाषाविज्ञानक्षेत्रे ध्वनिनियमसिद्धान्तनिरूपणद्वारा प्रभूतं यशोऽर्जितम्।

### ३०. एडल्बर्ट कुह्न ( Dr. A. Kuhn )

अनेन विदुषा शौनकीयबृहद्देवताया अनुशीलनं प्रकाशनञ्च कृतम् । मोक्षमूलरभट्टेनायं बहुश उल्लिखितः । अनेन १८५९ वर्षे 'दी हेराबकुन्फ्त देस फॉयर्स उन्त देस गोय्तरत्रांक्स' नामके स्वग्रन्थे वैदिकदेवशास्त्र-विषयिण्यः स्वीया धारणाः प्रकाशिताः । अत्रानेन प्रतिपादितं यद् वैदिक-देवशास्त्रं भारोपीयदेवशास्त्रस्य प्रतिनिधिभूतमेव । वैदिकयूनानजर्मनपर-म्पराः मूलतः एकरूपा एव भाषायाञ्च धर्मे च । अनेन विदुषा Sanskrit Worterbuch कोषनिर्माणे बोथलिंकवर्यस्य साहाय्यमाचरितम् । अस्यैकः प्रबन्धः 'Zeitschrift fur Vergleichende Sprachwissenchaft' इत्याख्यो वैदिकयातुमन्त्रविषयकः१८६४ वर्षे प्रकाशितः ।

### ३१. अल्फ्रेड लुडविग ( A. Ludwig )

अयं विद्वान् शर्मण्यदेशे प्रागनगरीयविश्वविद्यालये संस्कृतस्य प्राध्यापक आसीत् । वैदिककालविषये बहवः समालोचनात्मकनिबन्धाः अनेन लिखिताः । तथा चायं विद्वान् सम्पूर्णस्य ऋग्वेदस्य शर्मण्यभाषायामनुवादं कृतवान् । तस्यायमनुवादो द्वादशवर्षपरिश्रमेण १८७६ तः १८८८ पर्यन्तं प्रकाशमागतो मुद्रितश्च । ऋग्वेदस्यैतत्कृतो गद्यानुवादग्रन्थः 'Der Rgveda' इतिनाम्ना प्रकाशितो विस्तृतया व्याख्यया संवलितः षड्भागेषु वर्तते । अत्र प्रथमद्वितीयखण्डयोर्ऋग्वेदानुवादोऽस्ति । तृतीयः खण्डः 'दी मन्त्र-लित्तेरातुर उन्त दास आल्ते इण्डियन आल्स आइनलाइतुंग त्सुर युवरजेत्सुंग' इत्याख्यो भूमिकारूपो विद्यते । अस्मिन् खण्डे राथमैक्समूल-रादीनां मतानि स्वमतानि च प्रस्तुतानि । चतुर्थपञ्चमखण्डयोर्ऋग्वेदानु-वादस्य विस्तृता व्याख्या वर्तते । षष्ठे शब्दार्थसूची व्याकरणादि-टिप्पण्यश्च सन्ति ।

### ३२. एमीले बर्नूफ

अयं यूजेनबर्नूफमहोदयस्य वेदविदुषो भ्रातृज आसीत् । अनेन १८६३ वर्षे 'एस्से त्सुर लॅ वेद' इतिनाम्ना वेदविषयकनिबन्धाः प्रकाशिताः । एतेषु धर्म-साहित्य-संस्कृति-कर्मकलापादिकं विवेचितम् ।

### ३३. कार्ल एफ. गेल्डनर ( Karl F. Geldner )

अयं राथसिद्धान्तावलम्बी आसीत् । अनेन काएगीविदुषः साहाय्येन

१८७५ वर्षे टच्युबिंगननगरात् ऋग्वेदसंहितायाः सप्ततिसूक्तानामनुवादः प्रकाशितः। एतेन ऋग्वेदस्य कतिपयसूक्तानां स्वतन्त्रतया स्वीयोऽनुवादोऽपि १९०८ वर्षे कृतः। अयं शर्मण्यभाषानुवादः प्रामाणिको मन्यते। अस्य मण्डलचतुष्टयस्यानुवादः १९२३ वर्षे प्रकाशितः। अस्यान्तिमखण्डः १९२६ वर्षे प्रकाशितः। परन्तु एतत्प्रकाशनात्पूर्वमेवायं विद्वान् दिवं गतः।

गेल्डनरवर्येण 'Vedische Studien' नामा खण्डत्रयात्मको महनीयो ग्रन्थः शर्मण्यभाषायां विरचितः। वैदिकाध्ययनाख्येऽस्मिन् ग्रन्थे वेदमन्त्राणां व्याख्याप्यस्ति शर्मण्यभाषायाम्। ग्रन्थोऽयं रिचर्डपिशेल-गेल्डनरमनीषिणोर्व्याख्यानानां सङ्ग्रहः। अस्य प्रकाशनं १८८९,१८९२,१९०१ वर्षेषु जातम्। अनेन विदुषा 'वैदिकधर्मो ब्राह्मणधर्मश्च' इत्याख्यं पुस्तकं १९०८ वर्षे प्रणीतम्। १९१३ वत्सरे 'Die Indiche balla endichtund' नामको ग्रन्थो लिखितः।

## ३४. ऐडॉल्फ काएगी ( Adolf Kaegi )

अयमपि मनीषी राथसिद्धान्तानुयायी आसीत्। अनेन ऋग्वेदस्य सप्ततिसूक्तानामनुवादे गेल्डनरविदुषः साहाय्यमाचरितम्। एतयोः ऋग्वेदसूक्तानुवादग्रन्थस्य मूलं नाम 'Siebenzig Lieder des Rgveda Ubersetzt' इत्यस्ति। शर्मण्यदेशीयेनानेन विदुषा 'Der Rgveda die alteste litteratur der Inder' इत्याख्यं पुस्तकं १८७८-७९ वर्षयोः प्रकाशितम्। 'ऋग्वेदः : भारतीयानां प्राचीनतमसाहित्यम्' इत्यस्यास्य ग्रन्थस्यांग्लानुवादः किञ्चित्परिवर्तनयुतः आर०एरोस्मिथवर्येण 'The Rgveda : The oldest literature of Indians' इतिनाम्ना कृतः। अस्यैको ग्रन्थः 'Life in Ancient India' इत्याख्योऽपि वर्तते।

## ३५. रिचर्ड पिशेल

अयं विद्वान् गेल्डनरवर्येण सह सङ्गत्य ऋग्वेदविषये प्रभूतं समालोचनं कृतवान्। अनेन त्रयोदशवर्षाणि परिश्रम्य शर्मण्यभाषायां खण्डत्रयात्मकस्य 'Vedic Studies' इत्याख्यस्य वैदिकाध्ययनग्रन्थस्य प्रणयनं कृतम्। ग्रन्थस्यास्य मूलं नाम 'Vedische Studien' वर्तते। महाग्रन्थस्यास्य प्रकाशनं १८९१ वत्सरे जातम्। १९०६ वर्षेऽस्य विदुषः 'दि इण्डीश्यें लिटरेचर' इत्याख्यं पुस्तकं बर्लिनगरात् प्रकाशितम्। अस्य

भाषाविषयको ग्रन्थोऽप्यस्ति। अनेन 'आधुनिककालस्य संस्कृतयः' ( Die Kultur der Gegenwart ) इतिग्रन्थस्य, १९०६ वर्षे Liepzig नगरात् प्रकाशितस्य खण्डरूपेण 'भारतीयसाहित्यम्' पुस्तकं प्रणीतम्। अस्य मूलं नाम 'Die Orientalischen Literaturen' इत्यस्ति।

## ३६. एंजेलो डो गुबरनेटिस

अयं विद्वान् इटलीदेशीय आसीत्। अनेन 'लेत्तुरे सोप्रा ला माइतोलोजिआ वेदिका' नामा ग्रन्थः १८७४ वर्षे प्रकाशितः। अत्र द्युदेवमारभ्य रुद्रान्ता वैदिका देवाः सम्यग् विवेचिताः। अस्य विदुषः इदं मतमस्ति यद् वैदिकदेवशास्त्रं युद्धपरकमेव वर्तते। सर्वत्र ऋग्वेदे दिव्ययुद्धस्य चिह्नानि दृश्यन्ते।

अनेन स्वीये देवशास्त्रीयपशुविषयके 'जुआलोजिकल माइथोलॉजी' ग्रन्थे प्रारम्भ एव ऋग्वेदीयो विषयो गृहीतः। अयं ग्रन्थः १८७३ वर्षे प्रकाशितः।

## ३७. आर. टो. एच. ग्रिफिथ ( Ralph T. H. Griffith )

अयमांग्लदेशाभिजनः संस्कृतानुरक्तः सुप्रथितो विद्वानासीत्। अयं काशिकराजकीयसंस्कृतमहाविद्यालये प्रधानाचार्यपदे १८६१ वर्षमारभ्य १८७८ पर्यन्तं प्रतिष्ठित आसीत्। अनेन चतुर्णामपि वेदानामांग्लभाषायां पद्यमयोऽनुवादो विरचितः। तथा चान्येषां संस्कृतग्रन्थानामनुवादोऽप्यनेन विदुषा आंग्लपद्यमयः कृतः।

एतत्कृतः ऋग्वेदसंहिताया आंग्लपद्यानुवादः सायणभाष्यानुगुणः उपादेयाभिः सूचीटिप्पण्यादिभिः समलङ्कृतः खण्डद्वये १८८९-१८९२ वर्षेषु प्रकाशितः। सामवेदसंहिताया आंग्लपद्यानुवादः १८९३ वर्षे प्रकाशितः। अथर्ववेदस्य मूलार्थप्रकाशकोऽनुवादः पद्यमयः १८९५-१८९८ वर्षेषु काशीतः खण्डद्वये प्रकाशितः। शुक्लयजुर्वेदस्यानुवादो वाराणसीतः १८९९ वर्षे प्रकाशितः। अत्र माध्यन्दिनीयसंहिताया आंग्लभाषामयः पद्यानुवादो वर्तते। वाल्मीकिरामायणस्याप्येतेनांग्लपद्यानुवादः कृतः। अयं सुकविर्मनीषी वाराणसेये सरस्वतीभवने स्वाध्यायतपश्चकार। अविप्लुतब्रह्मचर्योऽयं वाराणस्यां स्वकीयाध्यवसायिताभव्यताभ्यां सुप्रथित आसीत्।

### ३८. आर्थर एंटोनी मैक्डानल ( A.A. Macdonell )

सुप्रथितोऽयमांग्लदेशीयो विद्वान् आक्सफोर्डविश्वविद्यालये संस्कृत-प्राध्यापक आसीत् । अनेन विदुषा बहूनां वैदिकग्रन्थानां प्रणयनं, सम्पादनं, प्रकाशनञ्च कृतम् । १८८६ वर्षे कात्यायनकृतायाः सर्वानुक्रमण्याः षड्गुरु-शिष्यविरचितवेदार्थदीपिकाख्यटीकासंयुतायाः प्रकाशनमनेन ऑक्सफोर्ड-विश्वविद्यालयतः कृतम् । शौनककृतबृहद्देवताग्रन्थस्यांग्लभाषानुवादोऽनेन व्यधायि । अस्य प्रकाशनं हार्वर्डओरियन्टलसिरीजग्रन्थमालायां १९०४ वर्षे जातम् । अनेन 'Vedic Religion' इत्याख्यो ग्रन्थो वैदिकधर्म-विषयकः प्रणीतः । कीथनाम्नो विदुषः साहाय्येनायं वैदिकसंज्ञापदपदार्थानां कोषस्य निर्माणं 'Vedic Index of Names and Subjects' इत्यभिधानेन कृतवान् । अयं ग्रन्थो वैदिकसंस्कृतेः प्रामाणिककोषः । अत्र ऐतिहासिक–भौगोलिक-सामाजिकादिविषयाणां सैतिह्यं मीमांसा वर्तते । कोषग्रन्थोऽयं १९१२ वर्षे London नगरात् प्रकाशितः ।

अनेन मनीषिणा 'Vedic Grammar' नाम्ना वैदिकं व्याकरणं समुपनिबद्धम् । एतच्च १९१० वर्षे शर्मण्यदेशे प्रकाशितम् । इदं व्याकरण-माधुनिकदृशाध्ययनपराणां कृते सर्वमान्यं प्रामाणिकञ्च । अत्रायं विशेषो यत् पाणिनीयव्याकरणे ये वैदिकप्रयोगाः बहुलं छन्दसीति नियमेनाप्रतिबद्धा-स्तेऽप्यत्र यथाशक्ति नियमैर्निबद्धाः । अस्यैव व्याकरणस्य लघुरूपं 'वैदिक ग्रामर फॉर स्टूडेन्ट्स' अपि ऑक्सफोर्डतः १९२० वर्षे प्रकाशितं वैदिक-च्छात्राणां कृते सर्वोत्तमं व्याकरणमस्ति । अत्र छन्दोनियमा विशिष्यन्त ।

अनेन विदुषा स्वप्रणीते 'वैदिकपुराणविज्ञानम्' ( Vedic Mythology ) इत्याख्ये ग्रन्थे वैदिकधर्मस्यान्यधर्मैः सह तुलनात्मकविवेचनं कृतमस्ति । अयं ग्रन्थः Strassburg स्थानात् १८९७ वर्षे प्रकाशितः । अस्य 'Hymns from the Rgveda' ग्रन्थः वैदिकमन्त्राणामध्ययनाय भृशमुपकारकः । अनेन 'वैदिक रीडर' नाम्ना वैदिकसूक्तानां विशिष्टानां सङ्ग्रहग्रन्थः सङ्कलितः । अत्र टिप्पणीव्याख्यादयो विशिष्टाः ।

अयं मनीषी संस्कृतसाहित्येतिहासमपि व्यरचयत् । अस्मिन् 'A History of Sanskrit Literature' ग्रन्थे प्राधान्येन वैदिकसाहित्य-स्यैव विशिष्टमैतिह्याध्ययनमस्ति । सोऽयं विशेषतश्छात्रोपयोगी वर्तते । अयं ग्रन्थः १९०० वर्षे लन्दननगरात् प्रकाशितः । ऐतिह्यविषयक एवास्या-न्यो ग्रन्थः 'India's Past' इत्याख्योऽप्यस्ति ।

## ३९. मॉरिस फिलिप्स

अनेन विदुषा आंग्लभाषायां वैदिकानुशीलनपरं पुस्तकद्वयं प्रणीतम्। एतत्प्रणीते 'The Teachings of the Vedas' इत्यत्र ग्रन्थे वैदिकनिर्देशाः समुक्ताः। 'Religion of Ind a' इत्याख्ये पुस्तके भारतीयधर्मविषयः प्रतिपादितः।

## ४०. जेकब वाकरनागेल ( Jacob Wackernagel )

अनेन मनीषिणा वैदिकव्याकरणविषयकं प्राचीनभारतीयव्याकरणाख्यं महनीयं पुस्तकं प्रणीतम्। अस्य नाम 'Altindische Grammatik' वर्तते। जर्मनभाषामयमिदं वैदिकसंस्कृतव्याकरणं त्रिषु खण्डेषु प्रकाशितमस्ति। अत्र नूतनतमानि भाषाशास्त्रीयानुसन्धानानि निर्दिष्टान्येतद्विषयकाणि। अनया दृष्टचा ग्रन्थोऽयं वैदिकव्याकरणविषये प्रौढतम इति विदुषां मतं भवति। अस्य ग्रन्थस्य प्रथमो भागः १८९६ वर्षे, द्वितीयः १९०५ वर्षे, तृतीयश्च १९३० वर्षे प्राकाश्यं नीतः। १८५३ वर्षे समुत्पन्नः १९४० वर्षे च पञ्चत्वं गतोऽयं मनीषी योरपमहाद्वीपीयप्राच्यवित्सु योग्यतमो मन्यते विद्वद्भिः।

## ४१. लियोपोल्ड वॉन श्रोडर ( L. won Schroeder )

अयं शर्मण्यदेशीयो विद्वानासीत्। अनेन विदुषा कृष्णयजुर्वेदीयाया मैत्रायणीसंहितायाः सम्पादनं सुयोग्यतया कृत्वा चतुर्षु खण्डेषु १८८१ तः १८८६ वर्षपर्यन्तं प्रकाशनं कृतम्। अनेन काठकसंहितापि चतुर्षु भागेषु १९०० तः १९१० पर्यन्तं प्रकाशिता। अथ चानेन 'Indians Literature and Culture' नामा ग्रन्थो लिखितः। अस्य मूलं नाम 'Indiens literatur und kultur' वर्तते। अस्य भारतीयेतिहाससंस्कृत्याख्यस्य ग्रन्थस्य विन्टरनित्सवर्येण स्वीये इतिहासग्रन्थे भृशमुपयोगः कृतः। अस्य 'मिस्टीरियम एण्ड दि हिम्स इन ऋग्वेद' इत्ययं ग्रन्थः १९०८ वर्षे लाइपजिगनगरात् प्रकाशितः। अत्र संवादसूक्ताधारेण लोकधर्मानुशीलनमस्ति। अस्य मूलं नाम 'Mysterium und Mimus im Rgveda' इत्यस्ति। अनेन विदुषा १९१४-१६ वर्षेषु 'ऑटिशे रिलीजन' नामको ग्रन्थः खण्डद्वये लिखितः।

## ४२. हरमन ओल्डेनबर्ग ( H. Oldenberg )

शर्मण्यदेशवास्तव्यस्यास्य मनीषिणो वैदिकवाङ्मयसेवायां योगः सुप्रथितो वर्तते। अनेन वैदिकच्छन्दसां विषये पञ्चशताधिकपृष्ठात्मको ग्रन्थः प्रणीतः। विशिष्टविवेचनपरोऽयं ग्रन्थः बर्लिनतः १८८८ वर्षे प्रकाशितः। एतेन शर्मण्यभाषायां वैदिकधर्मविषयकं पुस्तकं 'Die Religion des Veda' इत्यभिधेयं प्रणीतम्। सोऽयं ग्रन्थः १८८४ वर्षे प्रकाशितः। सुप्रथितस्यास्य ग्रन्थस्य पूर्वभागो देवशास्त्रविषयकः, उत्तरभागश्च कर्मकाण्डप्रतिपादकः। ओल्डेनबर्गवर्योऽपि वैदिकज्ञानाय कर्मकाण्डमावश्यकं मन्यते स्म। अयं विद्वान् ऋग्वेदे गवेषणापूर्णमुत्कृष्टं शर्मण्यभाषामयं भाष्यं व्यरीरचत्। इदं १९०९, १९१२ वर्षयोः खण्डद्वये बर्लिननगरात् प्रकाशितम्। ऋग्वेदभाष्ये अनेन विदुषा प्रतिसूक्तं पूर्वाचार्याणां व्याख्यानं निर्दिश्य ततः स्वीया विशिष्टा विवेचना कृता। केषाञ्चिद् वैदिकसूक्तानां सङ्ग्रहोऽनेन 'Die Hymnen des Rigveda' इत्येतस्मिन् पुस्तके कृतः। आंग्लभाषायामस्य नाम 'वैदिकहिम्स' इति प्रथितम्। ऋग्वेदीयानामाख्यानसूक्तानां विंशतिसंख्याकानां सङ्कलनमप्यनेन प्रकाशितम्। अस्य प्रबन्धस्य मूलं नाम 'Das Altindische Akhyana' इति, 'Akhyanahymnen im Rgveda' इति च वर्तते।

अनेन 'वर्ल्ड व्यू ऑफ ब्रह्मन्स' इति पुस्तकं विरचितम्। पुस्तकमिदं शर्मण्यभाषायां प्रकाशितमस्ति। एतेन विदुषा पवित्रप्राच्यग्रन्थमालायां त्रिंशत्तमे भागे आपस्तम्बपरिभाषासूत्रस्य सम्पादनं कृतम्। हिरण्यकेशिगृह्यसूत्रस्यानुवादोऽप्यनेन व्यधायि, पवित्रप्राच्यग्रन्थमालायां प्राकाशि च। आपस्तम्बश्रौतसूत्रमप्यनेन सम्पादितम्। अनेन 'Zur Geschichte der Altindischen Prosa' इत्याख्यं पुस्तकं लिखितम्। अत्र ब्राह्मणभागीयगद्यानां मैत्रायण्याद्युपनिषदाञ्च विचारो वर्तते। अस्य 'Vorwissenachaftliche wissenschaft' नामकप्रबन्धे ब्राह्मणग्रन्थानां विषये विचाराः प्रकाशिताः।

एतत्प्रणीतः 'Literatur des alten Indian' इत्ययं ग्रन्थोऽप्यस्ति। प्राचीनभारतीयवाङ्मयाख्योऽयं ग्रन्थः श्टुटगार्टतः १९०३ वर्षे बर्लिनतः प्रकाशितश्च। अनेन लाइपजिगनगरात् इण्डियनस्टडीजग्रन्थमालायां १८७८ वर्षे शाङ्खायनगृह्यसूत्रं शर्मण्यभाषानुवादसहितं सम्पादितम्। अनेन विदुषा पवित्रप्राच्यग्रन्थमालायां शाङ्खायना-श्वलायन पारस्कर-हिरण्यकेशि-

गोभिला-पस्तम्ब-खादिरगृह्यसूत्राणामांग्लानुवादाः कृताः प्रकाशिताश्च। आश्वलायनगृह्यानुवादो ग्रन्थमालायाः २९ पटले, गोभिलगृह्यानुवादश्च ३० पटले वर्तते।

ओल्डेनबर्गविदुषः 'Vedaforschung' नामाप्यस्ति प्रबन्धः। तथा च 'Uber die Liedverfasser des Rgveda' इत्याख्यः, 'Aus Indian und Iran' इतिनाम्नाप्यस्ति प्रबन्धोऽस्य वैदिकवर्यस्य।

## ४३. एल्फ्रेड हिलेब्राँट ( A. Hillebrandt )

शर्मण्यदेशाभिजनोऽयं विद्वान् वैदिकपुराणविज्ञानविषये महनीयं कार्यं सम्पादितवान्। अस्य वैदिकपुराणविज्ञानग्रन्थः 'Vedische Mythologie' नामा बृहत्कायेषु त्रिषु खण्डेषु प्रकाशितः शर्मण्यभाषात्मकः। एतत्प्रणीतेऽत्र ग्रन्थे वैदिकधर्मानुसन्धानप्रसङ्गे तुलनात्मकपुराणविज्ञानसिद्धान्ताः प्रतिपादिताः। ग्रन्थोऽयं १८९१ वर्षे Breslau स्थानात् प्रकाशितः। अनेन विदुषा श्रौतयज्ञानां विषयेऽपि प्रामाणिकः एको ग्रन्थो विरचितः। सोऽयं 'रिचुआल लितरातुर वेदिशॅ आफ्फॅर उन्त् त्सॉबर' इत्याख्यः जर्मनभाषामयः १८९७ वर्षे शर्मण्यदेशात् प्रकाशितः। एतत्प्रणीते 'Rituallitteratur' ग्रन्थे यज्ञेषु यातुविषयोऽपि प्रतिपादितः। एतेन १८८६-८९ वर्षेषु बिब्लियोथिका-इण्डिका-ग्रन्थमालायां शाङ्खायनश्रौतसूत्रं सम्पाद्य प्रकाशितम्। वैदिक-सूक्तानां केषाञ्चन शर्मण्यभाषानुवादः 'सम हिम्स फ्राम दि ऋग्वेद' इत्याख्ये पुस्तके प्रकाशितोऽनेन।

अस्यैको ग्रन्थः 'Das Altindische Neu-und Vollmondsopfer' नाम्ना Jena नगरतः १८७९ वर्षे प्रकाशितः। अत्र कल्पाङ्गस्य समीक्षणमस्ति। अनेन 'Aus Brahmanas und Upauisaden' नामकः प्रबन्धोऽपि प्रणीतः। अस्यैकोऽन्यः प्रबन्धः 'Die Sonnwendfeste in Alt-Indian' इत्याख्यः सामविषयको वर्तते।

## ४४. ए. बार्थ ( A. Barth )

अनेन विदुषा पेरिसनगरे फ्रेञ्चभाषायां वैदिकधर्मस्येतिहासो विरचितः। स बोस्टननगरात् १८९९ वत्सरे च प्रकाशितः। भारतीयधर्मेषु विवरणिकाः ( Bulletins des Religions de I-Inde ) इत्याख्योऽस्य ग्रन्थो वर्तते। तत्र वेदानां विषये बहु विवेचितम्। अयं ग्रन्थः १८७९ वर्षे

प्रकाशितः। अनेन वेदाः पौरोहित्यविषयका एव स्वीकृताः। प्रत्येकस्मिन् सूक्ते विचारगाम्भीर्यचिन्तनं च निराकृतम्।

**४५. रेगोजान**

अयं विद्वान् १८९५ वर्षे लन्दननगरे 'Vedic India' इत्याख्यस्य वेदप्रतिपादितभारतीयसंस्कृत्युपदेशकस्य ग्रन्थस्य प्रणयनं कृतवान्।

**४६. बी. लिंडनर** ( B. Lindner )

अनेन विदुषा शाङ्खायनापरपर्यायस्य कौषीतकिब्राह्मणस्य सम्पादनं कृतम्। तच्चेदं जेनानगरे १८८७ वर्षे प्रकाशितम्।

**४७. ए. सी. बर्नेल** ( A. C. Burnell )

अनेन विदुषा सामवेदविषये भूयान् श्रमो विहितः। सामविधानब्राह्मणं सायणभाष्यविभूषितमनेन सम्पादितम्। वंशब्राह्मणम्, देवताध्यायब्राह्मणम्, जैमिनीयमार्षेयब्राह्मणम्, संहितोपनिषद्ब्राह्मणञ्चेत्येते सामवेदीयग्रन्था अप्यनेन सम्पादिताः। तत्र सामविधानं लन्दननगरात् १८७३ वर्षे, वंशदेवताध्यायब्राह्मणे १८७३ वर्षे, आर्षेयब्राह्मणं १८७६ वर्षे, संहितोपनिषच्च मङ्गलौरतः १८७७ वर्षे प्रकाशितानि।

**४७. विलियम कैलेंड** ( W. Caland )

अयमपि विद्वान् सामवेदीयान् बहून् ग्रन्थान् प्रकाशितवान्। सामवेदस्य जैमिनिशाखायाः संहितायाः सम्पादनमनेनरोमनलिप्यां कृतम्। अस्य जैमिनीयब्राह्मणं १९१९ वर्षे मुद्रितम्। ताण्ड्यब्राह्मणं टिप्पणीयुतमनेन १९१८ वर्षे प्रकाशितम्। अनेन ताण्ड्यब्राह्मणस्य पञ्चविंशापरपर्यायस्य सामवेदीयस्यानुवादोऽपि विरचितः। स च कलकत्तानगरात् १९३२ वर्षे प्रकाशितः। अत्र सामवेदीयविषयबोधिनी कर्मकलापप्रकाशिका च विस्तृता महनीया भूमिकापि एतत्कृता वर्तते। अस्मिन् पादटिप्पण्योऽपि विशिष्टाः सन्ति। आर्षेयब्राह्मणमप्यनेन सम्पादितम्। मशककल्पसूत्रापरपर्यायमार्षेयकल्पसूत्रं १९०८ वर्षे लाइपजिगनगरादनेन प्रकाशितम्। जैमिनीयगृह्यसूत्रमप्यनेन १९२२ वर्षे नागरलिप्यां सटिप्पणं सम्पादितम्।

अनेन बौधायनश्रौतसूत्रं बिब्लियोथिका-इण्डिकाग्रन्थमालायां ( Bibliotheca Indica Series, १९०४-२४ ) प्रकाशितम्। अस्य

वाधूलसूत्रमप्यस्ति। अनेन बौधायनगृह्यसूत्रं १९०३ वत्सरे लाइपजिग-नगरतः प्रकाशितम्। तथा च १९२१-२८ वत्सरेषु आपस्तम्बश्रौतसूत्र-स्यैतत्कृतो जर्मनभाषानुवादः गाटिजननगरात् एम्सटर्डमतश्च प्रकाशितः। १९२७ वर्षे वैखानसगृह्यं, १९४१ वर्षे वैखानसश्रौतसूत्रं च सानुवादं द्वयमपि प्रकाश्य कर्मकाण्डाध्ययने बलं निहितमनेन। लौगाक्षिप्रणीतं काठक-गृह्यसूत्रमस्य १९२५ वर्षे प्रकाशितम्।

अनेन कौशिकसूत्राणामपि केषाञ्चन यातुसम्बन्धिनां जर्मनभाषायाम-नुवादो विहितः। अथर्ववेदीयवैतानश्रौतसूत्रं शर्मण्यभाषानुवादयुतं पाद-टिप्पणीविमर्शादिसहितं १९१६ वर्षे Amsterdam नगरात् प्रकाशितमनेन। हॉलैण्डतः अथर्ववेदोऽप्यनेन प्रकाशितः। अथर्ववेदीयं गोपथब्राह्मणमनेन १९०४ वर्षे प्रकाशितम्।

ऐतरेयकौषीतकिब्राह्मणयोर्ऋग्वेदीययोरपि १९१८ वर्षे अनेन टिप्पण्यादिद्वारा समालोचनं कृतम्। शांखायनश्रौतसूत्रस्यानुवादोऽपि च कृतः।

काण्वशाखीयशतपथब्राह्मणस्यांग्लभाषानुवादोऽप्येतत्प्रणीतो वर्तते। वैदिकधर्मविषयको ग्रन्थश्चानेन विरचितः। एवं ह्ययं महानध्यवसायी चतुर्वेदकल्पाङ्गप्रवीणः प्रसिद्धः।

## ४९. स्टेन कोनॉ

अनेन मनीषिणा सामविधानब्राह्मणमांग्लभाषायामनूदितम्, तच्च १८९३ वर्षे हालनगरे प्रकाशितम्। अनेन षड्विंशब्राह्मणमपि शर्मण्य-भाषानुवादटिप्पणीयुतं १८९३ वर्षे प्रकाशितम्। एतत्प्रणीते 'The Aryan Gods of the Mitani people' इत्यस्मिन् ग्रन्थे वैदिकधर्मो विवेचितः।

## ५०. पीटर पिटर्सन ( Peter Peterson )

अयमांग्लदेशाभिजनो विद्वान् भारतवर्षे बम्बईनगरे एलफिंस्टन-महाविद्यालये संस्कृतस्य प्राध्यापक आसीत्। भारतीयच्छात्राणां वेदाध्ययन सौकर्यार्थमनेन विदुषा केषाञ्चिद् विशिष्टानामृग्वेदीयसूक्तानां सङ्ग्रहः सायणभाष्यान्वितः 'Hymns from Rgveda' नाम्ना प्रकाशितः। १८८४ वर्षे अनेन संस्कृतहस्तलेखानां सूची अपि बम्बईनगरात् प्रकाशिता। अलवरमहाराजस्य पुस्तकसूची अनेन निर्मिता।

## ५१. जे. लाहोर

अयं फ्रांसदेशीयो विद्वानासीत्। अनेन फ्रेंचभाषायां वेदकालिकेतिहासः 'हिस्ट्री दि ला लिट्रेचर' नामके स्वीये ग्रन्थे पर्यालोचितः प्रकाशितश्च।

## ५२. एच. ब्रनहॉफर

अयं शर्मण्यदेशाभिजनो विद्वानासीत्। अनेन पत्रिकासु वेदविषयका बहवो लेखाः प्रकाशिताः। अस्यैको निबन्धः वैदिकगीतविषयकः 'Uber den Geist der Indischen Lyrik' वर्तते। अस्य विदुषः 'ईरान उन्त तुरान' नामकं पुस्तकं १८८९ वर्षे प्रकाशितम्। तत्र वैदिकदैवतर्षीणां नामानि ध्वनिसाम्यात् ईरानमूलकानि तेनोपकल्पितानि। यथा अगस्त्यो मूलतः फारसीभाषाया अशरगतो वर्तते। एवमेव कल्पनाप्रसूतोऽस्य ग्रन्थः। परमनेन ऋग्वेदस्योत्कृष्टकाव्यत्वं समर्थितम्।

## ५३. एच. जिमर ( Heinrich Zimmer )

अनेन शर्मण्यदेशाभिजनेन विदुषा 'Altindisches Leben' इत्याख्यो ग्रन्थः ऋग्वेदकालिकभारतीयसमाजव्यवस्थानिर्देशनपरो विरचितः। प्राचीनभारतीयजीवनाख्येऽस्मिन् ग्रन्थे सृष्टिविद्या ज्योतिषविद्येत्यादिकं बहु विवेचितमस्ति। सोऽयं बर्लिननगरात् १८७९ वर्षे प्रकाशितः। एतल्लिखितं 'New Indian Antiquary' इतिनामकं पुस्तकमप्यस्ति।

## ५४. एबेल बर्गेन ( Abel Bergaigne )

अनेन विदुषा १८७८ वर्षमारभ्य १८८३ पर्यन्तं पञ्चवर्षश्रमेण वैदिकधर्मविषये फ्रेञ्चभाषामयो ग्रन्थः 'La religion vedique d'apre's les hymnes du Rgveda' इत्याख्यो विरचितः। अयं ग्रन्थः खण्डत्रये वर्तते। वैदिकधर्मविषये स्वतन्त्रग्रन्थलेखकोऽयं प्रथमो विद्वानिति विद्वद्भिर्मन्यते। अनेन कर्मकाण्डभागस्याप्यौचित्यं स्वीकृतम्। तथा चानेन जर्मनभाषायां 'रिसर्चेज अबाँउट ऋग्वेद' इत्याख्यं खण्डद्वयात्मकं पुस्तकमपि प्रणीतम्।

## ५५. पॉल ड्यूसन ( Paul Deussen )

भारतविद्यायाः भक्तोऽयं भारतेषु देवसेननाम्ना प्रसिद्ध आसीत्। अनेन जर्मनभाषायां वैदिकदर्शनविषयकं 'फिलॉसाफी डेस वेद' नामकं पुस्तकं प्रणीतम्। तच्च १८६४ वत्सरे प्रकाशितम्। अथ चास्य 'System of Vedanta' इत्येतत्पुस्तकमप्यस्ति। अस्यान्यदेकं पुस्तकं 'The Philsophy of the Upanisadas' इत्याख्यं १८९९ वर्षे प्रणीतम्, Edinburgh तः १९०८ वर्षेऽपि प्रकाशितम्। १८९७ वर्षे षष्टयुपनिषदामनुवादोऽनेन प्रकाशितः। स च 'Sixty Upanisadas of the Veda' इति नाम्ना वर्तते।

## ५६. ई. हार्डी ( E. Hardy )

अनेन विदुषा वैदिकब्राह्मणधर्मविषये शर्मण्यभाषामयं पुस्तकं प्रणीतम्। तच्च 'Die Vedisch-brahmanische periode der religion des alten Indiens' इत्याख्यं १८९३ वर्षे Munster स्थानात् प्रकाशितम्।

## ५७. ई. डब्ल्यू. हॉपकिन्स ( E. Washbur Hopkins )

अनेन विदुषा १९०९ वर्षे ताण्डचमहाब्राह्मणस्य दैवतर्षिवर्णनात्मकं संक्षिप्तरूपं अमेरिकादेशे कनेकटिकटस्थानात् प्रकाशितम्। १८९५ वर्षे 'दि रिलीजन्स ऑफ इण्डिया' इत्याख्यो ग्रन्थोऽस्य आंग्लभाषात्मकः बोस्टननगरात् प्रकाशितः। अस्यैको ग्रन्थः 'Ethics of India' नामकोऽप्यस्ति। अपरश्चैकः 'Gods and Saints of Great Brahmanas' इत्ययं वर्तते। अस्य प्रबन्धः 'The Punjab and the Rgveda' इत्यभिधेयः १९३८ वर्षे प्रकाशितः। अथ च 'India : Old and New' इति १९०२ वर्षे न्यूयार्कनगरात् प्रकाशितः। अस्य 'इपिक माइथोलॉजी' ग्रन्थोऽप्यस्ति।

## ५८. एच. वालिस ( H. Wallis )

अनेन मनीषिणा ऋग्वेदोक्तसृष्टिक्रमविषये आंग्लभाषायां 'Cosmology of the Rgveda' इत्ययं ग्रन्थो विरचितः। स च लन्दननगरात् ?८१७ वर्षे प्रकाशितः।

**५९. एल. शेरमन** ( L. Scherman )

अयं शर्मण्यदेशाभिजनो विद्वानासीत्। अनेन शर्मण्यभाषायां ऋग्वेदाथर्ववेदयोर्दार्शनिकसूक्तान्याश्रित्य विवेचनापरो ग्रन्थः १८८७ वर्षे प्रकाशितः। अस्य ग्रन्थः 'Materialien zur Geschichte der Indischen Visions Litteratur' इत्याख्यः Leipzig नगरात् १८६२ वर्षे प्रकाशितः।

**६०. सिलवाँ लेवी** ( Sylvain Levi )

अयं फ्रांसदेशाभिजन आसीत्। अनेन विदुषा 'Le Theatre Indien' इत्याख्यो ग्रन्थः प्रणीतः। अत्रानेन ऋग्वेदीयानां विंशतिसंख्याकानामाख्यानसूक्तानां नाटकस्य पूर्वरूपत्वमुपपादितम्। फ्रेंचभाषामयोऽयं ग्रन्थः १८९० वर्षे पेरिसनगरात् प्रकाशितः। अनेन 'La doctrine du sacrifice dans les Brahmanas' इत्याख्यः प्रबन्धोऽपि रचितः। स च पेरिसनगरात् १८९८ वर्षे प्रकाशितः।

**६१. रूडॉल्फ मेयर**

अनेन वेदविषयका बह्वो निबन्धाः प्रणीताः प्रकाशिताश्च। १८७८ वर्षे ऋग्विधानग्रन्थस्य सम्पादनमनेन कृतम्। एतेन मन्त्रोच्चारणसमनन्तरमुत्पद्यमानाया अपूर्वशक्तेरपि वर्णनं कृतमस्ति।

**६२. डी. क्यूलो कोन्सकिज**

अयं रूसदेशीयो विद्वानासीत्। अनेन १८८२ वत्सरे सोमविषयकः श्येनाख्यानविषयकश्च ग्रन्थो गवेषणापूर्णः रूसीभाषात्मकः प्रकाशितः।

**६३. पी. रेनोड** ( P. Regnaud )

अयं फ्रांसदेशाभिजन आसीत्। अनेन विदुषा १८९२-१९०० वर्षेषु ऋग्वेदविषयकोऽनुसन्धानसन्दृब्धः ग्रन्थः फ्रेंचभाषायां निर्मितः। 'ले ऋग्वेद एत् लां ओरिजिनेस् दे ला माइथॉलॉजी इंडोयूरोपिअन्ने' इत्याख्ये ग्रन्थे अनेन सर्वेषां वैदिकवर्णनानां यज्ञकर्मकाण्डपरत्वं प्रतिपादितम्। अस्यापरो ग्रन्थः 'La Pessimisme Brahmanique' इत्याख्योऽप्यस्ति।

### ६४. बेन्टले

अनेन विदुषा वैदिककालविषयक आंग्लभाषामयो ग्रन्थः १८९३ वर्षे प्रकाशितः। अस्य नाम 'हिस्टोरिकल व्यू ऑफ दि हिन्दू एस्ट्रोनॉमी' इत्यस्ति ।

### ६५. हरमन जैकोबी ( H. Jacobi )

वैदिककालनिर्णयात्मकोऽस्य ग्रन्थो महनीयः १८९३ वर्षे प्रकाशितः सुप्रथितः। अत्र ज्योतिषाधारेण वेदस्य कालनिरूपणं प्रतिपादितम् । अस्य विदुषो मतमस्ति यद् वेदानां कालः ४००० ईशवीयाब्दपूर्वं वर्तते ।

### ६६. प्रो. क्रिश्चियन लॉसन (Prof. von Christian Lassen)

अयं शर्मण्यदेशीयो विद्वानासीत् । विंशतिवर्षाणि श्रान्त्वा अनेन १८४३ तः १८६२ वर्षेषु वैदिकसाहित्येतिहासग्रन्थः प्रणीतः। अस्य मूल नाम 'Indische Alterthumskunde' इत्यस्ति । भारतीयपुरातत्त्वाख्यमिदं पुस्तकविशिष्टं खण्डचतुष्टये Bonn, Leipzig स्थानाभ्यां प्रकाशितमस्ति । यद्यप्यस्य भारतीयपुरातत्त्वग्रन्थः सम्प्रति विस्मृतिपथं गतस्तथापि मूलभूतोऽयं ग्रन्थोऽर्वाचीनग्रन्थकाराणां पथप्रदर्शकोऽभवत् । अनेन विदुषा 'Indian Antiquities' नामके ग्रन्थे भारतीयाचार्याणां कालक्रमः कश्चन समुपकल्पितः। स च मोक्षमूलरभट्टादिभिः समादृतः। लॉसनवर्यः ऑगस्टविल्हेलम-फॉन-श्लेगल-विदुषः शिष्य आसीत् ।

### ६७. एफ. सैंडर ( F. Sander )

अनेन विदुषा १८९३ वर्षे आंग्लभाषायाम् 'Rigveda and Edda' नामकं पुस्तकं प्रणीतं Stockholm नगरात् प्रकाशितञ्च ।

### ६८. ए. एच. सायसे ( A. H Sayce )

अयममेरिकादेशाभिजनो विद्वानासीत् । अनेन १८९१ वर्षे वाशिंगटननगरे 'प्रिमिटिव ऑफ दि आर्यन्स' इत्याख्यो ग्रन्थः प्रणीतः। अथ चैतल्लिखितः 'Antiquities of Civilise Man' इत्ययं प्रबन्धोऽप्यस्ति ।

### ६९. कूर्ट क्लेम

अनेन विदुषा १८९४ वर्षे सामवेदीयं षड्विंशब्राह्मणं सुसम्पाद्य

प्रकाशितम् । अत्र षड्विंशब्राह्मणस्य प्रथमप्रपाठकः सायणभाष्यसारयुतः शर्मण्यभाषायामनूदितो वर्तते । षड्विंशे पञ्चप्रपाठकाः सन्ति । अस्यैव पञ्चमः प्रपाठकः अद्भुतब्राह्मणमिति व्यपदिश्यते । वस्तुतस्तु ताण्ड्यब्राह्मणस्य पञ्चविंशतिः, षड्विंशस्य पञ्च, मन्त्रब्राह्मणस्य द्वौ, छान्दोग्योपनिषदश्च अष्टौ, प्रपाठकाः एते सम्भूय चत्वारिंशत्संख्याकाः 'ताण्ड्यमहाब्राह्मणम्' इति संज्ञां लभन्ते ।

## ७०. आर. डब्ल्यू. फ्रेजर ( R. W. Frazer )

अनेन विदुषा 'A Literary History of India' इत्ययं ग्रन्थो विरचितः । भारतीयसाहित्येतिहासाख्योऽयं ग्रन्थः लन्दननगरात् प्रकाशितः । अत्र वैदिकसाहित्यस्य परिचयः प्रदत्तो वर्त्तते । अथ चास्य 'Indian Thought : Past and Present' इति ग्रन्थः १९१५ वर्षे लन्दननगरात् प्रकाशितः ।

## ७१. वी. हेनरी ( V. Henry )

अयं फ्रांसदेशाभिजनो विद्वानासीत् । अनेन विदुषा फ्रेंचभाषायां वैदिकसाहित्येतिहासग्रन्थो विशिष्टो विरचितः । १९०४ वर्षेऽस्य 'Les Litteratures de I' Inde' इत्ययं ग्रन्थः, भारतस्य साहित्यम् इत्याख्यः पेरिसनगरात् प्रकाशितः । एतल्लिखितं पुस्तकं 'Revue Critique' इति नाम्नापि विद्यते । अस्य अग्निष्टोमपुस्तकमपि वर्तते । अस्यैको ग्रन्थः 'La magic dans L'Inde antique' इत्ययं पेरिसनगरात् प्रकाशितः ।

## ७२. एम. विन्टरनित्स (Maurice Winternitz)

शर्मण्यदेशाभिजनोऽयं सुप्रथितो वैदिकविद्वानासीत् । अनेन विदुषा ऋग्वेदस्य द्वितीयसंस्करणप्रकाशनकाले मोक्षमूलरभट्टस्य साहाय्यमाचरितम् । अनेन शर्मण्यभाषायां वैदिक-संस्कृतसाहित्यस्येतिहासो लिखितः । स चायं १९०४ वर्षमारभ्य खण्डत्रये प्रकाशितः । अस्य मूलग्रन्थः 'Indischen Litteratur' ( गेशिश्ते देआर इन्दिशेन लितरातुर ) इत्याख्यो जर्मन-भाषामयः लाइपजिगनगरात् प्रकाशितोऽभूत् । अस्य प्रथमखण्डे वैदिक-साहित्यस्य सुविस्तृतः परिचयो वर्तते । वेबर-मैक्समूलर-मैक्डॉनलप्रणीतानां वैदिकसाहित्येतिहासानां दृष्ट्यायमितिहासग्रन्थो व्यापको विस्तृतश्चास्ति । यद्यप्ययं मूलतो जर्मनभाषीयजनानां कृते विरचित इति सामान्यवर्णना-

भिवृद्धः, तथापि वैदिकानुसन्धित्सूनां कृते भृशमुपादेय एव। खण्डत्रयात्मकस्यास्य ग्रन्थस्याद्यं खण्डद्वयं कलकत्ताविश्वविद्यालयतः आंग्लभाषायामनूद्य प्रकाशितम्। अनूदितश्च 'History of Indian Literature' नाम्ना प्रकाशितोऽयं ग्रन्थः। तृतीयखण्डस्याप्यांग्लानुवादः 'History of Indian Literature' इत्याख्यया वाराणसीतः प्रकाशितः। हिन्दीभाषायामस्यानुवादः 'प्राचीनभारतीय-साहित्येतिहास' नाम्ना वाराणसीतः प्रकाशितः। स चायं समधिको लोकप्रिय इति पाठ्येषु निर्धारितः।

'अस्य एन्श्येन्ट-वेलेड-हिस्ट्री' नामा ग्रन्थः १९२५ वत्सरे प्रकाशितः। अनेन 'Sacred Books of the East Series' ग्रन्थमालायाः सूचीभागः (Index) पञ्चाशत्तमखण्डरूपेण तस्याः ग्रन्थमालाया अन्तिमपटलत्वेन प्रकाशितः। एतेन आपस्तम्बगृह्यसूत्रं सुसम्पाद्य १८८७ वर्षे वियनानगरात् प्रकाशितम्। आपस्तम्बमन्त्रपाठोऽप्यनेन १८९७ वर्षे आक्सफोर्डतः प्राकाश्यं नीतः। अयं मूलरूपेण 'The Mantra–Patha or the Prayer Book of the Apastambins' इति आपस्तम्बगृह्यसूत्रसम्बद्धमन्त्राणां सङ्ग्रहो वर्तते।

अस्य विदुषः श्राद्धविषयकः प्रबन्धः 'Notes on Sraddhas' नाम्ना WZKM ग्रन्थे १८९० वर्षे प्रकाशितः। तथा चास्य संस्कारप्रतिपादिनी पुस्तिकैका 'On a comparative study of Indo-European Customs, with special reference to the Marriage customs' इत्याख्या वर्तते। कलिकर्तनपुरे एतत्कृतव्याख्यानानां सङ्ग्रहः 'Some Problems of Indian Literature' पुस्तिकायां १९२५ वर्षे प्रकाशितः। अस्यैकं पुस्तकं 'दास आल्तिन्दिशे हॉरव्त्साइतरितुअल—नख दोम आपस्तम्बीयगृह्यसूत्र उन्त आइनिगेन आन्देरन् फेरवान्देतेन वेर्केन' इत्याख्यं विवाहादिसंस्कारविचारपरमापस्तम्बानुसारं १८८२ वर्षे प्रकाशितम्।

## ७३. आर. गार्बे ( Richard Garbe )

अनेन वैदिकविदुषा १८८२ वर्षमारभ्य १९०२ वत्सरपर्यन्तं विंशतिवर्षाणि परिश्रम्य आपस्तम्बश्रौतसूत्रस्य सम्पादनं प्रकाशनञ्च बिब्लियोथिका-इण्डिकाग्रन्थमालायां भागद्वये कृतम्। ततः पैप्पलादशाखीयस्याथर्व-

वेदस्य प्रकाशनं कृतम् । पैप्पलादसंहिताया एका एव पाण्डुलिपिः काश्मीरेषूपलब्धाऽऽसीत् । गार्बेमहोदयो ब्लूमफील्डविदुषः साहाय्येनास्याः जीर्णप्रतेः छायाप्रतिरूपं (फोटोकॉपी) विधाय बृहत्सु खण्डेषु १९०१ वर्षे शर्मण्यदेशात् प्रकाशितवान् । मूललेखस्य प्रतिकृतिरियमिति महत्तां धारयति ।

अनेन वैतानश्रौतसूत्रमप्यथर्ववेदीयं शर्मण्यभाषायामनूदितम् । तस्य १८७८ वर्षे लन्दननगरात् सूत्राणि, Strassburg स्थानाच्च शर्मण्यभाष्यमनेनेदम्प्रथमतया प्राकाशि । अनेन 'Beitrage zur Indischen kulturgeschichte' नामकः प्रबन्ध प्रणीतः । स च बर्लिननगरात् १९०३ वर्षे प्रकाशितः । १९१४ वर्षेऽस्य 'Indian und des Christentum' ग्रन्थः Tubingen स्थानात् प्रकाशितः ।

## ७४. डी· गास्ट्रा ( D. Gaastra )

अयं हॉलैण्डदेशवास्तव्यो विद्वानासीत् । अनेन विदुषा लाइडननगरात् गोपथब्राह्मणमथर्ववेदीयं प्रकाशितम् । गोपथब्राह्मणस्येदं नागराक्षरसंस्करणं १९१९ वर्षे प्रकाशितम् । अस्य मूलं नाम 'Des Gopatha Brahmana' वर्तते । अनेन जैमिनीयगृह्यसूत्रस्य डचभाषायामनुवादोऽपि कृतः । स च १९०६ वर्षे प्रकाशितः ।

## ७५. एम. ब्लूमफील्ड ( Maurice Bloomfield )

अयं वैदिकसाहित्यसमाराधनपरो मनीषिवर्यः अमरीकादेशवास्तव्य आसीत् । संस्कृतप्रणयिना अनेन स्वीयं संस्कृताभिधानं 'पुष्पक्षेत्रो राम' इत्येवं प्रकाशितम् । सुप्रथितेनानेन पुष्पक्षेत्रेण वैदिकविदुषा प्रभूतानां वैदिकग्रन्थानां प्रकाशन-सम्पादन-प्रणयनादिकं व्यधायि ।

अथर्ववेदविषये अनेन बहु कार्यं सम्पादितम् । पैप्पलादशाखीया अथर्ववेदसंहिता शारदालिप्यां लिखिता काश्मीरेषु समुपलब्धानेन । ततो हस्तलिखितपुस्तकस्य छायाप्रतिकृतिं ( Photocopy ) गृहीत्वा, तस्य प्रकाशनं बृहदाकारेषु चतुर्षु खण्डेषु १९०१ वर्षे अनेन कृतम् । अत्र गार्बेमहोदयस्यापि सहयोग आसीत् । १८९० वर्षे अनेन कौशिकगृह्यसूत्रस्याथर्ववेदीयस्य प्रकाशनं कृतम् । अत्रानेन विदुषा विस्तृता भूमिका विशिष्टविचारपूर्णा प्रायशः शतपृष्ठात्मिका लिखिता । मूलग्रन्थे च पाठभेदाः

केशवदारिलाथर्वपद्धत्यादीनां निर्देशाः, व्याख्याः, स्थलनिर्देशाः, स्वीयविचाराश्चोल्लिखिताः।

अनेन पवित्रप्राच्यग्रन्थमालाया द्विचत्वारिंशे भागे 'Hymns of the Atharvaveda' नाम्ना अथर्ववेदीयानि सूक्तानि सानुवादं प्रकाशितानि। अथ च 'अथर्ववेद एण्ड गोपथब्राह्मण' नामको गवेषणाग्रन्थो विरचितः।

अस्य 'The Vedic Concordance' नामा महाग्रन्थः वैदिकवाङ्मये अपूर्वं गौरवं धारयति। वैदिकमन्त्रमहासूचीनामकोऽयं महाग्रन्थः सहस्राधिकपृष्ठात्मको बृहदाकारः रोमनलिप्यां प्रकाशितः। अयं ग्रन्थः हॉर्वर्डओरियन्टलसिरीजग्रन्थेषु दशमो १९०६ वत्सरे मुद्रितः। अस्मिन् तेन ११९ पुस्तकानामुपयोगः कृतः। अत्र तावत्कालपर्यन्तं मुद्रितानां वैदिकग्रन्थानामृचादीनां प्रतिपादं सूची वर्तते। प्रैषाणां यजुर्मन्त्राणां गद्यात्मकानामपि निर्देशोऽत्र विद्यते। अस्य प्रारम्भे महनीया विद्वदुपयोगिनी भूमिकापि विदुषा ब्लूमफील्डवर्येण सङ्गृहीता। अस्मिन् विभिन्नपाठभेदानामपि सङ्ग्रहोऽस्ति। वैदिकानुसन्धानपरायणानां कृते ग्रन्थोऽयं महानुपयोगीति नातितिरोहितम्।

अनेन १९०८ वत्सरे आंग्लभाषायां न्यूयार्कनगरात् 'The Religion of the Veda' नामकं स्वीयं पुस्तकं प्रकाशितम्। अस्य मूलरचना १८९४ वर्षे शर्मण्यभाषायां सञ्जाता। अयं ग्रन्थः पुष्पक्षेत्रकृतधर्मेतिहासव्याख्यानानां सङ्ग्रहरूपः। अयं विद्वान् १९१६ वर्षे 'Rgvedic Repetitions' नामकं ग्रन्थं खण्डद्वये प्रकाशितवान्। ऋग्वेदीयपुनरुक्तमन्त्रसूचीयं हार्वर्ड-ओरियन्टलसिरीजग्रन्थेषु २०, २४ खण्डयोः प्रकाशिता। अत्र ऋग्वेदीयमन्त्रपादानां कुत्र कुत्र पुनरावृत्तिः, कश्चात्र हेतुरिति मीमांसा विद्यते। अयं ग्रन्थो विशेषज्ञानां कृते भृशमुपादेयः।

अस्य 'The God Indra and the Samaveda' इत्ययं प्रबन्धः १९०३ वर्षे प्रकाशितः। अथ च 'On the Relative Chronology of Vedic Hymns' इत्ययं प्रबन्धः १९०० वर्षे प्रकाशित आसीत्। अनेन एफ-इटर्जनवर्यस्य 'वैदिक वेरिएंट्स' ग्रन्थे साहाय्यं विहितम्। अस्य 'Contribution to the Interpretation of the Veda' इत्ययं प्रबन्धः १८९३ वर्षे प्रकाशितः।

**७६. एच. ओएर्टल** ( H. Oertal )

अनेन विदुषा सामवेदीयारण्यकरूपस्य जैमिनीयोपनिषद्ब्राह्मणस्यांग्लभाषानुवादसहितं प्रकाशनं कृतम्। अत्र टिप्पण्योऽपि विशिष्टाः सन्ति। एतत्पुस्तकम् अमेरिकन-ओरिएण्टलसोसायटीजर्नल-ग्रन्थस्य षोडशतमे भागे १८९६ वर्षे प्रकाशितमस्ति। अयमृग्वेदभाष्ये सायणेनोद्धृतस्य शाटचायनब्राह्मणस्य सामवेदीयस्य विषयं १८९७ वर्षे 'जर्नल ऑफ दि अमेरिकन ओरियन्टल सोसायटी' पत्रस्याष्टादशभागे विवेचितवान्।

**७७. ए. एफ. स्टेन्जलर** ( A. F. Stenzler )

अनेन विदुषा ऋग्वेदीयस्याश्वलायनगृह्यसूत्रस्य सानुवादस्य १८६४ वर्षे भागद्वये प्रकाशनं कृतम्। १९७६-७८ वर्षेषु एतेन पारस्करगृह्यसूत्रस्य सम्पादनं कृतम्। अत्र शर्मण्यानुवादोऽपि वर्तते।

**७८. एफ. नाउएर** ( F. Knauer )

अनेन विदुषा सेन्टपिटर्सबर्गस्थानतः मानवश्रौतगृह्यसूत्रयोः सम्पादनं कृतम्। १८९७ वर्षे मानवगृह्यसूत्रमनेन प्रकाशितम्। मानवश्रौतसूत्रस्यानेनेदम्प्रथमतया प्रकाशनं १९०० वर्षे कृतम्। १८८४-८६ वर्षेष्वनेन गोभिलगृह्यसूत्रं शर्मण्यभाषानुवादयुतं प्रकाशितम्।

**७९. जॉर्ज बुह्लर** ( George Buhler )

अयं वियनानगरवास्तव्य आसीत्। भारतीयसाहित्यस्य विशालतां, पाश्चात्यदेशेष्वस्य प्रसारञ्चावधार्य भारतीयज्ञानस्य विश्वकोषयोजनां जॉर्जबुह्लरमहोदयोऽकरोत्। तदर्थञ्च १८९७ वर्षे भारतार्यभाषाविज्ञानपुरातत्त्वविश्वकोषस्य प्रणयनं तेन प्रारब्धम्। अस्य मूलं नाम 'Grundriss der In o-Arischen Philologie und Altertumskunde' इत्यस्ति। बुहलरवर्यो बहुविषयज्ञो महाविद्वानासीत्। अस्य Grundriss कोषे शर्मण्यां-ग्ल-भारत-अमरुक-आस्ट्रिया-हॉलैण्डदेशानां त्रिंशद्विद्वांसः विभिन्नशाखासु सम्पादने साहाय्यं कृतवन्तः। बुहलरानन्तरं फ्रैन्जकीलहार्नवर्यः, ततश्च एच. लुइडर्सवर्यः, जे. वाकेरनागेलवर्यश्चास्य महाकोषस्य सम्पादनं कृतवन्तः। भारतविद्याया ऐतिह्ये अस्य Grundriss विश्वकोषस्य प्रकाशनमपूर्वं महत्त्वपूर्णं सुन्दरतमञ्चास्त्यद्वितीयम्।

बुह्लरविदुषा 'The Sacred Laws of the Aryans' नामा स्वीयो ग्रन्थः खण्डद्वयात्मकः पवित्रप्राच्यग्रन्थमालायाः द्वितीयचतुर्दशपटलयोः प्रकाशितः। मनुनामकोऽस्य ग्रन्थोऽपि तस्यां ग्रन्थमालायां पञ्चविंशे पटले प्रकाशितः। अस्य विदुषः भाषाविषयको ग्रन्थः 'Indische Palaeographie' इत्याख्यो वर्तते। १८३७ वर्षे समुत्पन्नेनानेन विद्वत्तल्लजेन संस्कृतपाण्डुलिपिग्रन्थानामन्वेषणे भूयान् श्रमो विहितः। अयं हि बम्बईनगरे शिक्षाविभागीयाधिकारित्वेन नियुक्तः 'Bombay Sanskrit Series' ग्रन्थमालायाः प्रतिष्ठापनमकरोत्। अनेन गुर्जरेषूपलब्धग्रन्थानां सूची निर्मिता। १८७५ वर्षे अनेन विदुषा संस्कृतग्रन्थान्वेषणस्य कार्यविवरणं प्रकाशितम्। अयं विद्वान् १८९८ वर्षे दिवङ्गतः।

### ८०. ए. बी. कीथ ( Arthur Berriedale Keith )

अयमांग्लदेशीयो विद्वान् मैक्डानलविदुषोऽन्तेवासी D.C.L.,D.Lit. उपाधिधारी आसीत्। अनेन १९१४ वत्सरे तैत्तिरीयसंहितायाः कृष्णयजुर्वेदीयायाः आंग्लभाषानुवादः प्रकाशितः। खण्डद्वयात्मकेऽस्मिन् ग्रन्थे समुपयोगिनी विद्वन्मनोहारिणी च भूमिकापि संयोजिता वर्तते। तैत्तिरीयसंहितानुवादोऽस्य हॉर्वर्ड-ओरियन्टल-सिरीजग्रन्थेषु १८, १९ भागयोः अमेरिकातः प्रकाशितः। तत्र अष्टादशभागे तैत्तिरीयब्राह्मणस्य विषयानुक्रमणी अप्येतत्कृता वर्तते।

अनेन ऐतरेयकौषीतकिब्राह्मणयोर्ऋग्वेदीययोरांग्लभाषानुवादोऽपि कृतः। अयमनुवादः Horvard Oriental Series ग्रन्थमालायां २५ तमे पटले शताधिकपृष्ठात्मिकया वैदुष्यख्यापिकया भूमिकया संयुक्तः प्रकाशितः। १९०९ वर्षे कौषीतकीत्यपरनामधेयं शाङ्खायनारण्यकमांग्लभाषानुवादसम्भूषितं कृत्वायम् आक्सफोर्डतः प्रकाशितवान्। हार्वर्डओरियन्टलसिरीजग्रन्थमालाया अष्टादशे पटले अनेन माध्यन्दिनीयं शतपथब्राह्मणं प्रकाशितम्। १९०९ वर्षे ऐतरेयारण्यकमनूद्यानेन प्रकाशितम्। १९२६ वत्सरे च तैत्तिरीयारण्यकं प्रकाशितम्।

अस्य गोपथब्राह्मणविषयकं कार्यं १९१० वर्षे 'जर्नल ऑफ दि रायल एशियाटिक सोसाइटी' पत्रे प्रकाशितम्। अनेन JRAS पत्रे १९१३ वर्षे व्रात्यविषयको विचारः, १९०७ वर्षे वैदिकधार्मिकसिद्धान्तविषयको विचारः, १९०९ वर्षे प्रमेयविषयको विचारश्चैते लेखरूपेण प्रकाशिताः।

अस्य 'The Authorship of the Nyaya-Prakash' इत्याख्यो लेखोऽप्यस्ति।

अस्य विदुषः सुप्रथितो ग्रन्थः 'Religion and Philosophy of the Vedas and Upanishadas' इत्याख्यः हार्वर्डओरियन्टल-सिरीजग्रन्थेषु ३१-३२ संख्ययोः भागद्वये १९३४-३५ वर्षयोः प्रकाशितः। अत्र ग्रन्थे वैदिकधर्मस्य उपनिषदां तत्त्वज्ञानस्य च विचारसंवलिता मीमांसा वर्तते। वैदिकधर्ममीमांसायामयं पाश्चात्त्येषु नव्यभारतीयवेदवित्सु च सुभृशं समादृतः सप्तशताधिकपृष्ठात्मको ग्रन्थो विद्यते। अनेन 'History of Sanskrit Literature' इत्याख्यः ऐतिह्यग्रन्थोऽपि विरचितः। वैदिकसंज्ञापदपदार्थकोषग्रन्थस्य 'Vedic Index' इत्याख्यस्य प्रणयने मैक्डानलवर्यस्य साहाय्यमनेन कृतम्। स तु कोषग्रन्थः एतेन भागद्वये प्रकाशितः। अस्य 'केम्ब्रिज हिस्ट्री ऑफ इण्डिया' नामकं पुस्तकं १९२२ वर्षे प्रकाशितम्। एतत्प्रणीतं 'Sanskrit Drama' इति पुस्तकमप्यस्ति। अयं विद्वान् विन्टरनित्सविदुषा प्रारब्धां बोडलियमपुस्तकालयस्य सङ्ग्रहसूचीं परिपूर्य ऑक्सफोर्डतः १९०५ वर्षे प्रकाशितवान्।

## ८१. जी. थीबो ( Dr. G. Thibaut )

शर्मण्यदेशीयोऽयं विद्वान् काशिकराजकीसंस्कृतकॉलेजसंस्थायाः प्राचार्यपदमलमकरोत्। १८७९ वर्षमारभ्य १८८८ पर्यन्तमयं प्राचार्य-पदाधिष्ठितः १८८० वर्षे भारतवर्षे इदम्प्रथमतया संस्कृताध्ययने लिखित-परीक्षाप्रणालीमारब्धवान् राजकीयसंस्कृतकॉलेजसंस्थायाम्। संस्कृतभाषा-पटुरयं कातीयशुल्बपरिशिष्टं सम्पाद्य पण्डितपत्रस्य चतुर्थग्रन्थाङ्के प्रकाशितवान्। तथा चानेन विदुषा बौधायनशुल्बस्य प्रकाशनं पण्डितपत्रस्य नवमग्रन्थाङ्के कृतम्।

## ८२. सी. आर. लैनमैन ( C. R. Lanmann )

अयमांग्लदेशीयो विद्वानासीत्। अनेन ह्विटनेविदुषोऽपूर्णः अथर्व-संहितानुवादः पूरितः, टिप्पण्यादिभिः समलङ्कृत्य च १९०५ वर्षे अमरीकातः खण्डद्वये प्रकाशितः। अत्र सार्धशतपृष्ठात्मिका गुणगरिष्ठा भूमिकापि वर्तते। अयं ग्रन्थः हॉर्वर्डओरियन्टलसिरीजग्रन्थेषु सप्तमाष्टम-पटलयोः प्रकाशितः। अनेन विदुषा १९२० वर्षे हॉर्वर्डओरियन्टलसिरीज-

ग्रन्थमालायामैतरेयब्राह्मणग्रन्थोऽपि सम्पादितः। अस्य 'Sanskrit Reader' इत्याख्यं पुस्तकमप्यस्ति।

### ८३. जूनियस एग्लिंग ( J. Eggeling )

अनेन विदुषा शतपथब्राह्मणमांग्लभाषायामनूदितम्। अत्र ग्रन्थे पञ्चखण्डात्मके विस्तृता शोधपूर्णा गुणभूयिष्ठा च भूमिका अनेन विदुषा संयोजिता। अयं ग्रन्थः पवित्रप्राच्यग्रन्थमालायाः ( Sacred Books of the East ) १२, २६, ४१, ४३, ४४ ग्रन्थेषु प्रकाशितोऽस्य महोदयस्याध्यवसायं वैदुष्यं तपस्याञ्च प्रकाशयति।

### ८४. ई. वी. ऑर्नल्ड ( E. V. Arnold )

अयमांग्लो विद्वानासीत्। अनेन विदुषा ऋग्वेदे समागतानां छन्दसां विवेचनपरः 'वैदिक मीटर इन इट्स हिस्टॉरिकल डेवलपमेन्ट्स' इत्याख्यो ग्रन्थः प्रणीतः। अत्र ग्रन्थे ऋग्वेदीयच्छन्दसामध्ययनेन तदाधारेण च मन्त्राणां कालनिर्णयाय प्रयासः कृतोऽस्ति। परिश्रमपूर्णा अप्यस्य विचारा न प्रसिद्धिं गतवन्त इत्याश्चर्यमेव। अस्य 'Vedic Metre' ग्रन्थः १९०५ वर्षे Cambridge स्थानात् प्रकाशितः। अनेन कीथसाहाय्यद्वारा 'On the metre of the Rgved', as a criterion of its age' इतिप्रबन्धोऽपि १९०६ वर्षे लिखितः।

### ८५. जे. शेफ्टेलोवित्स ( Dr. Phil J. Scheftelowitz )

अयं शार्मण्यो विद्वानासीत्। अनेन ऋग्वेदीयखिलसूक्तानि शर्मण्यभाषानुवादयुतानि १९०६ वर्षे प्रकाशितानि। खिलसूक्तानां पृथक् संस्करणग्रन्थोऽयं तेन काश्मीरेषु शारदालिप्यां लिखितं खिलसङ्ग्रहमधिगत्य 'Apokryphen des Rgveda' नाम्ना Bonn स्थानात् प्रकाशितः।

### ८६. एच. डी. ग्रिसवोल्ड ( H. Dewitt Griswold )

अनेन विदुषा 'The Religion of the Rgveda' नामकश्चतुश्शतपृष्ठात्मको ग्रन्थो वैदिकधर्मविषयको विरचितः। अस्य ग्रन्थस्य १९२३ वर्षे प्रकाशनं जातम्। अनेन 'गॉड वरुण इन दि ऋग्वेद' इत्याख्यो ग्रन्थो वरुणविषयकोऽपि लिखितः। अस्य ऋग्वैदिकधर्मविषयको ग्रन्थः ख्रीस्तमताग्रहग्रस्तो दृश्यते। अस्य परिच्छेदत्रयात्मकस्य ग्रन्थस्य प्रथमपरिच्छेदे

भारोपीयभारतार्यधर्मस्य विचारो वर्तते। द्वितीयपरिच्छेदे वैदिकदेवताविषये एकेश्वरसर्वेश्वरवादानां निरूपणमस्ति। तृतीयपरिच्छेदे उत्तरकालिकवैदिकधर्मस्य भारतीयदार्शनिकसिद्धान्तानां विवरणमस्ति। तथा चानेन विदुषा 'Brahman : A study in the story of Indian philosophy' नामकं पुस्तकं १९०० वर्षे न्यूयार्कनगरात् प्रकाशितम्।

**८७. जे. क्रीस्टे** ( J. Kirste )

हिरण्यकेशीयसत्याषाढसूत्राण्यनेन विदुषा सम्पादितानि। अस्य हिरण्यकेशीयगृह्यसूत्रं १८८९ वर्षे वियनानगरात् प्रकाशितम्।

**८८. जे. एन. रूटर** ( Dr. J. N. Reuter )

अनेन १९०४ वर्षे लन्दननगरे द्राह्यायणश्रौतसूत्रस्य सामवेदीयस्य सम्पादनं कृतम्।

**८९. एच. एफ. एलसिंग**

अनेन विदुषा १९०८ वर्षे लाइडननगरतो विज्ञापनाभाष्ययुतस्य षड्विंशब्राह्मणस्य प्रकाशनं कृतम्। षड्विंशब्राह्मणं नाम ताण्ड्यमहाब्राह्मणस्य पञ्चविंशब्राह्मणाख्यभागानन्तरमन्तिमः षड्विंशतितमाध्यायभागः पूरकः। षड्विंशस्यैवान्तिमो भागोऽद्भुतब्राह्मणमिति व्यपदिश्यते।

**९०. जी. एम. बॉलिंग** ( G. M. Bolling )

अनेन शर्मण्यभाषायां १९०९ वत्सरे नेगेलिनसाहाय्येन अथर्वपरिशिष्टानां प्रकाशनं कृतम्। अनेन विदुषा शान्तिकल्पस्याथर्ववेदीयस्यापि सम्पादनं कृतम्।

**९१. जे. नेगेलिन** ( J. von Negelein )

अनेन विदुषा अथर्वपरिशिष्टानां सम्पादने प्रकाशने च बॉलिंगमहोदयस्य साहाय्यमाचरितम्।

**९२. जे. डबलू. सोलोमन**

अनेन विदुषा भारद्वाजश्रौतसूत्रस्य सम्पादनं प्रकाशनञ्च कृतम्। १९१३ वर्षे अनेन भारद्वाजगृह्यसूत्रं लाइडननगरात् प्रकाशितम्।

**९३. जे. एम. गेल्डर** ( J. M. von Gelder )

शार्मण्येनानेन विदुषा मानवश्रौतसूत्रस्य चयनभागस्य सम्पादनं कृत्वा १९२१ वर्षे लाइडननगरे तत्प्रकाशितम् । आंग्लभाषामयः एतत्कृतानुवादः १९६१-६३ वर्षेषु दिल्लीनगरात् डा०रघुवीरमहोदयस्यान्तर्राष्ट्रियभारतीयसंस्कृतिसंस्थानतः प्रकाशितो विद्यते ।

**९४. जे. ग्रिल**

एतेन विदुषा 'हैंड्रेड लेसन्स एण्ड लेक्चर्स ऑफ अथर्ववेद' इत्याख्यो ग्रन्थः प्रणीतः प्रकाशितश्च ।

**९५. पी. ड्यूमण्ड**

अनेन विदुषा 'लॉ अश्वमेध' इत्याख्यो ग्रन्थः फ्रेंचभाषात्मको लिखितः । स च १९२७ वर्षे प्रकाशितः । अत्राश्वमेधस्यैतिहासिकं विवेचनं विद्यते ।

**९६. ह्यूम** ( Robert Ernest Hume )

अनेन विदुषा 'The Thirteen Principal Upanishadas' इत्ययं ग्रन्थः Oxford स्थानात् प्रकाशितः । अस्य प्रस्तावनाभागे उपनिषदां सिद्धान्ताः साधु विवेचिताः । अनेन ईशाद्युपनिषदनुवादोऽपि १९२१ वर्षे प्रकाशितः ।

**९७. एफ. ओ. श्रादर** ( F. Otto. Schrader )

अनेन विदुषा काश्चन उपनिषदः 'Minor Upanisadas' इतिनाम्ना प्रकाशिताः । तत्र भूमिकादिकमपि विशिष्टं संयोजितम् । अनेन 'प्रीहिस्टोरिक एण्टिक्विटीज' नामा ग्रन्थोऽपि लिखितः । अनेन विदुषा 'Indian Antiquity' ग्रन्थे ईशोपनिषदो विशिष्टं विवेचनं 'A Critical study of Ishopanishad' इत्यभिधानेन कृतम् ।

**९८. बारेट** ( L. C. Barret )

अनेन विदुषा अथर्ववेदीयायाः पैप्पलादसंहितायाः सम्पादनं 'The Kashmirian Atharvaveda' इतिनाम्ना कृतम् । अस्याः प्रकाशनं १९०१ वर्षमारभ्य जातम् ।

**९९. ई. जे. थॉमस**

अनेन विदुषा वैदिकसूक्तानां संग्रहः 'Vedic Hymns' नाम्ना १९२३ वर्षे लन्दननगरात् प्रकाशितः। अत्र ऋग्वेदसूक्तानामांग्लभाषानुवादोऽपि वर्तते।

**१००. ई. डब्लू. फे** ( Edwin W. Fay )

अयमांग्लदेशीयो विद्वानासीत्। अनेन 'The Rgveda-mantras in the Grhya-sutras' इत्याख्यो ग्रन्थः प्रणीतः। अयं १८९९ वर्षे प्रकाशितः। अत्र पुस्तके ऋग्वेदीयमन्त्राणां विनियोगविषयो विचारितः। १९०६ वर्षऽस्य विदुषो वेदसम्बन्धिनो बहवो लेखाः विभिन्नपत्रिकासु बहुत्र प्रकाशिताः।

**१०१. एल. डीला वाली पौसन** ( L. de la Vallee Paussin )

अयं फ्रांसदेशीय आसीत्। अनेन विदुषा 'La Vedisme' इत्याख्यो ग्रन्थो विरचितः। सोऽयं १९०९ वर्षे पेरिसनगरात् प्रकाशितः। अत्र वैदिकधर्मविषये विचारा निबद्धाः। अस्य 'La Brahmanisme' इत्ययं ग्रन्थोऽपि पेरिसनगरात् १९०९ वर्षे प्रकाशितः।

**१०२. ह्यूगो विंकलर**

अयं शर्मण्यदेशीयो विद्वानासीत्। अनेन विदुषा एशियामाइनरस्थाने प्राप्तासु प्राचीनेष्टकासु मुद्रितानां वैदिकदेवतानां नाम्नामाधारेण वैदिककालनिर्धारणविषये स्वीया सिद्धान्तसमालोचना १९०७ वर्षे प्रकाशिता। वेदकालनिर्धारणविषयेऽस्य विचाराः समाद्रियन्ते विद्वद्भिः।

**१०३. ई. अर्बमैन**

अयं शार्मण्यो विद्वानासीत्। अनेन विदुषा वैदिकदेवशास्त्रविषयको ग्रन्थः १९२२ वर्षे प्रकाशितः। अस्य 'Rudra Untersuchungen zem altindischen Glauben und Kultus' नामकः शोधनिबन्धः १९२२ वर्षे प्रकाशितः।

## १०४. जे एन. फर्कुटर

अयमांग्लदेशीयो विद्वानासीत्। अनेन धार्मिकसाहित्य-वैदिकधर्म-हिन्दुधर्मादिविषयकाश्चत्वारो ग्रन्थाः प्रणीताः।

## १०५. आर. बी. क्लेटन

अयं ख्रीस्तमताग्रही ग्रिस्वोल्डवदासीत्। अनेन 'Rgveda and Vedic Religion' नामकं पुस्तकं प्रणीतम्। अत्रास्य ख्रीस्तमताग्रहः स्फुटं दृश्यते। इदं पुस्तकं मद्रासनगरात् १९१३ वर्षे प्रकाशितम्।

## १०६. जान हर्टल ( J. Hertel )

शर्मण्यदेशीयोऽयं विद्वान् शर्मण्यभाषायां 'Indische Marchen' नामकं ग्रन्थं लिखितवान्। अयं Jena नगरतः १९२१ वर्षे प्रकाशितः। अस्य विदुषः उपनिषद्विषयको ग्रन्थः 'Die Weischeit der Upanischaden' नामको वर्तते।

## १०७. ई. सीज ( E Sieg )

अस्य शार्मण्यविदुषो ग्रन्थः 'Die Sagenstoffe des Rigveda und die Indische Itihas tradition' इत्याख्यः १९०२ वत्सरे Stuttgart स्थानात् प्रकाशितः।

## १०८. जे. कार्पेन्टियर

शार्मण्येनानेन विदुषा १९२० वर्षे आख्यानसूक्तविषये गेयकाव्यत्वे ग्रन्थो विरचितः। एतल्लिखितः प्रबन्धः 'Die Suparnasage' इत्ययं वर्तते। अयं सौपर्णाख्यानविषयको ग्रन्थः १९२१ वर्षे प्रकाशितः। अस्यैकं पुस्तकं 'ब्रह्मन्' इत्याख्यमप्यस्ति।

## १०९. आर. ली बिच ( R. Lie Bich )

शार्मण्येनानेन विदुषा कौषीतकिब्राह्मणस्य दशमाध्यायः शर्मण्यभाषायामनूदितो लाइपजिगनगरे १९०८ वर्षे। अथ च शाकल्यकृतस्य ऋग्वेदीयपदपाठस्य विवेचनमप्यनेन कृतमस्ति। अनेन उपनिषदां विषयेऽपि विचाराः प्रकाशिताः।

### ११०. एफ. इटर्जन

अनेन विदुषा वैदिकपाठभेदविषये पुनरुक्तिविषये च 'वैदिक वेरियेन्ट्स' इत्याख्यो ग्रन्थः प्रणीतः। सुप्रथितेऽत्र ग्रन्थे वैदिकमन्त्रेषु पाठान्तरविचारः साधु निरूपितः। ग्रन्थस्यास्य निर्मापणे ब्लूमफील्डविदुषोऽपि साहाय्यमासीत्। अस्यैको ग्रन्थः अथर्ववेदविषयकः 'The Philosophical materials of the Atharvaveda' इत्याख्योऽपि वर्तते।

### १११. कर्नल जी. ए. जैकब ( G. A. Jacob )

अनेन विदुषा षट्षष्टयुपनिषद्ग्रन्थानामुपनिषद्वाक्यकोषग्रन्थः प्रणीतः। अत्रोपनिषदां वाक्यानि गीतायाः पङ्क्तयश्चैतत् सूचीकृतम्। वेदवाक्यानामयं बृहत्सूचीग्रन्थोऽध्ययने सुदृढामुपयोगितां धत्ते। अयं 'Concordance of Upanisads' ग्रन्थः १९१२ वत्सरे प्रकाशितः।

### ११२. आर. एन. अलब्राइट

अनेन विदुषा 'The Vedic decbusien of the typy vikis' इत्याख्यो ग्रन्थो वैदिकव्याकरणविषयको विरचितः। आंग्लभाषात्मकोऽयं ग्रन्थः १९२७ वर्षे प्रकाशितः।

### ११३. डब्लू. बुस्ट

अयं शर्मण्यदेशीयो विद्वानासीत्। अनेन वैदिकेतिहासविषयको बृहद्ग्रन्थो विरचितः। अत्र वैदिकसाहित्यसंस्कृतिदेवशास्त्रादिविषया विवेचिताः सन्ति। सोऽयं ग्रन्थः १९२६ वर्षे प्रकाशितः।

### ११४. बी. जी. रेले

अनेन विदुषा 'वैदिकगॉड्स एज फिगर्स ऑफ बॉयलॉजी' इत्याख्यो ग्रन्थः प्रणीतः। अत्र प्रतिपादितमस्ति यद् वैदिक्यो देवताः मानवशरीरस्यांगभूताः। तत्रापि मस्तिष्काङ्गस्यावयवभूता देवता विशेषतया सन्ति। अयं ग्रन्थः १९३१ वर्षे प्रकाशितः।

### ११५. के. रोतो

अनेन विदुषा गौणदेवतास्वरूपनिरूपणपरस्त्रित-आप्त्यदेवविषयको ग्रन्थः प्रणीतः, १९२७ वर्षे प्रकाशितश्च।

## ११६. एम. मोनियर विलियम्स (Sir Monier Monier-Williams)

अयं हि विद्वद्वरिष्ठः भारतीयप्रशासनसेवायां लब्धाधिकारिपदः M. A. उपाधिधारी आसीत्। Gottingen स्थानादनेन Ph. D. उपाधिर्लब्धः। अयं Oxford स्थाने Balliol College संस्थायां प्राध्यापकः आसीत्। ततश्च तत्रैव विश्वविद्यालये Boden Professor of Sanskrit पदमनेनालङ्कृतम्।

अनेन विदुषा संस्कृतांग्लशब्दकोषग्रन्थो विशिष्टः प्रणीतः। अस्य ग्रन्थस्य प्रारम्भिकसंस्करणं १८७२ वर्षे सेंटपिटर्सबर्गकोषप्रकाशनात् पूर्वमेव प्रकाशितमभूत्। परं परिवर्द्धितं साङ्गं प्रथमं संस्करणं Oxford स्थानात् १८९९ वर्षे प्रकाशितम्। अत्र कोषग्रन्थे संस्कृतशब्दानामर्थनिर्णये वेदमारभ्यैव विवेचनं कृतम्। शब्दानां वैदिको मूलप्रयोगः स्वराङ्कनयुतोऽत्र निर्दिष्टस्ततश्च विकासक्रम उपस्थापितः। अतो वैदिकाध्ययनपराणां कृते विशिष्टोऽयं महाकोषग्रन्थः आवश्यक एव।

संस्कृतांग्लकोषग्रन्थस्य निर्माणात् पूर्वमनेन विदुषा English-Sanskrit Dictionary ग्रन्थोऽपि कश्चन अपूर्व एव संग्रथितः। स च १८५१ वर्षे The East-India Company द्वारा प्रकाशितोऽभूत्। अनेन विदुषा 'Brahmanism and Hinduism' इत्ययं ग्रन्थः, 'Indian Wisdom' इत्ययं ग्रन्थश्च प्रणीतः। द्वावपि London नगरात् प्रकाशितौ।

संस्कृतांग्लकोषस्य साङ्गोपाङ्गस्य निर्माणसंशोधनादिकं विधाय, मुद्रणालये प्रदानानन्तरमयं विद्वान् France देशे Cannes स्थाने १८९९ वर्षे अप्रेलमासस्यैकादशतारकायां दिवङ्गतः। कोषग्रन्थस्य प्रकाशनं तस्य देहपातानन्तरं तत्पुत्रेण M. F. Monier-Williams वर्येण कारितम्।

## ११७. आर. सायमन ( R. Simon )

अनेन विदुषा सामवेदीयं पुष्पसूत्रं पञ्चविधसूत्रञ्च शर्मण्यभाषायामनूद्य प्रकाशितम्। पुष्पसूत्रमस्य १९०८ वर्षे शर्मण्यदेशात् प्रकाशितम्।

## ११८. जी. पट्स

अयं विद्वानुपलेखसूत्राणि सम्पाद्य प्रकाशितवान्।

## ११९. ए. वेन्स

अनेन भारतीयसंस्कृतिशोधानां सङ्ग्रहग्रन्थः 'दि इनसाइक्लोपीडिया ऑफ इण्डो-आर्यन रिसर्च' इत्याख्यः प्रकाशितः।

### १२०. नोसेर

अयं विद्वान् ऋग्वेदविषयकं कोषग्रन्थं निर्मितवान् ।

### १२१. स्मिट

अनेनापि विदुषा वैदिककोषः सङ्कलितः प्रकाशितश्च ।

### १२२. लुई रेनो ( Louis Renou )

अयं फ्रांसदेशाभिजनो विद्वानासीत् । अनेन विदुषा 'वैदिकसूक्तेषु परोक्षभूतस्य स्थानम्' इतिविषयमधिकृत्य ग्रन्थः प्रणीतः । स च १९३१ वर्षे पेरिसनगरात् प्रकाशितः । अथ च वैदिकसाहित्येतिहासनिरूपकोऽस्य ग्रन्थ-विशेषः 'Bibliographie Vedique' इत्याख्यो वर्तते । अत्र ग्रन्थे वैदिक-वाङ्मयसम्बद्धानां विविधभाषासु प्रणीतानां ग्रन्थानां लेखादीनाञ्च परिचय उल्लिखितो वर्तते । अयं फ्रेंचभाषामयो ग्रन्थः पेरिसनगरात् प्रथमतः १९३१ खीस्ताब्दे प्रकाशितः । ततश्च नैके खण्डाः प्रकाशिताः ।

वैदिकधर्मविषयोऽस्य विदुषः १९५३ वर्षे प्रकाशिते 'Religions of India' इत्याख्ये ग्रन्थे प्रारम्भ एव अध्यायद्वये विवेचितः । वैदिकव्याकरण-विषये 'ग्रामेअर दे ला लांगुआ वेदीक' इति ग्रन्थोऽनेन विदुषा १९५२ वर्षे प्रकाशितः । अस्यैको महाग्रन्थः 'Etudes Vedique et Paninienns' इत्याख्यो वर्तते ।

### १२३. एम. जे. ड्रेस्डन

अनेन विदुषा मानवगृह्यसूत्रस्यांग्लभाषायामनुवादः कृतः । स च १९४१ वर्षे बटावियानगरात् प्रकाशितः ।

### १२४. जे. प्रजिलुस्की

अनेन विदुषा वैदिकदेवशास्त्रविषये शोधो विहितः । अस्य मतमस्ति यद् वैदिकदेवधारणाः ऑस्ट्रेलेशियाविचारोद्भूताः सन्ति ।

### १२५. पी. क्रेत्श्मर

अयमपि वैदिकदेवशास्त्रविचारकः वरुणविषये 'वरुण उन्त दी उरगे-शिश्ते देअर इन्देर' ( वरुणो, भारतीयानां प्राचीनेतिहासश्च ) इत्याख्यं ग्रन्थं लिखितवान् । इन्द्रविषयेऽस्य ग्रन्थद्वयमस्ति । 'त्सुम उरश्प्रुंग देस

गोत्तेस इन्द्र' ( इन्द्रदेवतोद्भवः ) १९२७ वर्षे प्रकाशितः। 'इन्द्र उन्त देअर हेतितिशे गोत्त इनरस ( इन्द्रः हित्तीदेव इनरसश्च ) इति ग्रन्थश्च १९२८ वर्षे प्रकाशितः।

## १२६. हाइनरिख ल्यूडर्स

अयं विद्वान् वरुणदेवस्य विषये बृहद्ग्रन्थं लिखितवान्। 'वरुण' इत्याख्यं पुस्तकं तन्मृत्योरनन्तरं खण्डद्वये प्रकाशितम्। प्रथमखण्डः १९५१ वर्षे, द्वितीयश्च १९५९ वर्षे प्रकाशितः।

## १२७. जार्जस डुमेजिल

अनेन विदुषा वैदिकदेवशास्त्रविषयकः 'ल आइडियोलॉजी ट्रिपार्टी देस इण्डो-यूरोपियन्स' इत्याख्यः ग्रन्थः, उत्पादक-पुरोहित-योद्धात्रिवर्ग-प्रतिपादिकः १९५८ वर्षे प्रकाशितः। वरुणविषये अनेन 'ओरेनेसवरुण' ग्रन्थः १९३४ वर्षे, 'मित्रवरुण' इति ग्रन्थश्च १९४८ वर्षे प्रकाशितः।

## १२८. जॉन खोंडा

अनेन विदुषा वैदिकानुशीलनपरेण बहु विवेचितं स्वीयग्रन्थेषु। स्वोपज्ञसिद्धान्ताश्च बहुशः प्रतिपादिताः। अस्य ग्रन्थपरम्परा एवमस्ति—

(१) वैदिकधर्मविषयो 'मण्डूकसूक्त इन ऋग्वेद' इति पुस्तके १९४८ वर्षे प्रकाशिते विवेचितः।

(२) 'नोट्स ऑन ब्रह्मन्' इति पुस्तके १९५० वर्षे प्रकाशिते ब्रह्मणो विचार उपदिष्टः।

(३) 'फोर स्टडीज इन द लैंग्वेज ऑफ द ऋग्वेद' इति ग्रन्थे ऋग्वेदस्य चतुर्णामेव पदानां विशदमध्ययनं प्रस्तुतम्।

(४) 'आई एंड गेज इन ऋग्वेद' इतिपुस्तके ऋग्वेदीयनेत्रवाचक-पदानां सर्वाङ्गीणमनुशीलनमस्ति।

(५) 'ऑस्पेक्ट्स ऑफ अर्ली वैष्णविज्म' ग्रन्थे वैष्णवतत्त्वस्य वैदिकं विवेचनं कृतम्। अयं ग्रन्थः १९५४ वर्षे प्रकाशितः।

(६) 'सम आब्जर्वेशन्स ऑन द रिलेशन्स बिट्वीन गॉड्स एंड पावर्स' अस्मिन् ग्रन्थे वैदिकदेवताविमर्शः सम्पादितः।

(७) वैदिकधर्मविमर्शपरोऽस्य ग्रन्थः 'दी रिलीजनेन इण्डियन्स वेद उन्त आल्तेरेर हिन्दुइस्मुस' इत्याख्यो वर्तते।

(८) देवताद्वन्द्वविषये अनेन विदुषा 'द डयुअल डिटीज इन द रिलीजन ऑफ दी वेद' इत्ययं ग्रन्थः प्रणीतः।

(९) सवयज्ञविषयिणी पुस्तिका महनीया 'द सवयज्ञाज' नाम्ना विद्यते।

(१०) 'स्टाइलिस्टिक रेपिटीशन इन द वेद' इत्याख्ये ग्रन्थे पुनरुक्तमन्त्रादीनां विचारः समुपस्थापितः।

(११) धामशब्दार्थविषये 'द मीनिंग ऑफ द संस्कृत टर्म धामन्' इत्ययं ग्रन्थस्तत्प्रणीतो वरीवर्ति।

(१२) १९७६ वर्षे 'ट्रायड्ज इन द वेद' ग्रन्थः प्रकाशितः। अत्र वैदिकसाहित्ये त्रिवर्गाणां लोक-व्याहृति-गुणादीनां पर्यालोचनं कृतमस्ति। अस्य 'लोक, वर्ल्ड एण्ड हेवेन इन द वेद' इत्यादयोऽपि ग्रन्थाः सन्ति।

**उपसंहृतिः**

उपरिलिखितप्रबन्धेनास्माभिर्यथामति वैदेशिकमनीषिणां केषाञ्चन वेदान्वेषणपराणां कृत्यादिसङ्ग्रहो व्यधायि। एतदतिरिक्ता अपि भूयिष्ठा विद्वद्वरिष्ठा वैदेशिका राजन्ते, येषां परिचयाद्युल्लेखोऽत्र वैशद्यभिया विवरणसङ्ग्रहाशक्त्या वा नास्माभिरकारि। जोन्स-गिल्स-कीलहार्न-गोल्डस्टुकर-ग्रियर्सन-श्लेगल-रैप्सन-प्रभृतिभिर्मनीषिवर्यैरपि साक्षादप्रत्यक्षतो वा वेदानुशीलने साहाय्यं समकल्पि। परमेतेषामितिवृत्तादिकमस्माभिरत्र न प्राकाशि। तत्रास्मत्सङ्ग्रहबुद्धिबलानुदय एव हेतुर्न तेषां विपश्चिदपश्चिमानां कर्तृत्वाभाव इत्यवगन्तव्यम्। अथ च तत्तद्वैदेशिकभाषाणां लिपि-वर्ण-तल्लक्ष्म-तदुच्चारणादिविशेषाणां मुद्रणादौ यथाविधोपलब्धिसौविध्याभावादत्र प्रबन्धे स्खलनानुभवः स्वाभाविक एव।

अतस्तदनुल्लेखायथोल्लेखाद्यर्थं क्षमाकामोऽहमेतत्प्रबन्धसङ्ग्रथने साहाय्यमाचरितवतां विदुषां, मित्राणां, तत्प्रणीतसङ्गृहीतग्रन्थलेखसूच्यादीनां च कृते आभारं विज्ञापयन् प्रार्थये वेदपुरुषम्—

प्रभुवर, सुरावलीललितवाङ्मयाध्यापनं,<br>
समुन्नय गवेषणाचतुरचिन्तनोज्जृम्भितम्।<br>
विकासय धरातले सुरगिरस्तदध्यायिनां<br>
निरभ्रशरदागमस्फुटशशाङ्कशोभं यशः॥

# मधुपर्कपर्यालोचनम्

भारतीयपरम्परायां केषाञ्चन विशिष्टानां पुरुषाणां विशिष्टासु स्थितिषु शास्त्रबोधितविधया सम्माननायार्चनं क्रियते। सोऽयमर्चनविधिः मधुपर्कनाम्ना सर्वेष्वपि गृह्यसूत्रेषु वर्णितोऽस्तीति सार्ववैदिकत्वं सार्वजनीनत्वञ्चास्य विशिष्यते वैदिककर्मकलापपरम्परायाम्। यद्यप्यन्यदेशीयपरम्परास्वपि कश्चन स्वागतार्चनप्राशनविधिर्दृश्यते। यथा रसदेशे समागतस्य प्रियतरस्य सैन्धवसंयुतया करपट्टिकया स्वागतार्चनं क्रियते। परं तत्र न कश्चन मन्त्रविधिर्न वा शास्त्रनिर्देशस्तद्देशीयोऽपि वर्तते। व्यवहारपरम्परामाश्रित्यैव ते तथा प्राशनं प्रतिपादयन्ति। भारतेषु तु स्वागतार्चनप्राशनस्य मधुपर्काख्यस्य स्फुटमुल्लेखः शास्त्रेषु, विधिनिर्देशो निबन्धेषु, व्यवहारपरम्परा च यज्ञसंस्कारादिषु समुपलभ्यत एवेति विशेषः। अथापीदङ्काले शास्त्रनिर्देशपराङ्मुखाः स्वपारम्पर्यमजानन्तोऽपि व्यवहारपण्डितम्मन्याः केचन भारतीयाः वैदेशिकपरम्परानुदासाः परकीयविधानेनैव स्वागतार्चनं कुर्वन्ति। यथा रसदेशीयराष्ट्रपतेर्न मधुपर्कविधानेनार्चनमत्र दृष्टचरम्। वस्तुतस्तु भारतीयेयं मधुपर्कार्हणपरम्परा भारतानां समृद्धिं सौख्यं शिवञ्च समुद्योतयति।

## मधुपर्कार्हणस्य वैदिकत्वम्

मधुपर्कार्हणविधिः गृह्यकल्पेषु कात्स्न्र्येन वर्णितः। परं मधुपर्कार्हणं गृह्योक्तमेवेत्यस्य नार्वाक्कालिकत्वं शङ्कनीयम्। वैदिकसंहितास्वपि मधुपदप्रयोगस्य भूयिष्ठत्वान्मधुनः प्राचीनतमत्वं सर्वोपकारकत्वञ्च सिद्ध्यति। मधुपर्कार्हणस्य मूलमपि ऋग्वेदे—'मध्वा सम्पृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब' इत्येवमुपलभ्यते[1]। अत्र मधुनः सम्पर्केण निष्पादितस्य पानं स्फुटं दृश्यते। तथा च मधुपर्कस्य श्रेष्ठाय समर्पणे मूलमप्यृग्वेद एवमस्ति[2]—

'वृषणे त इन्दुर्वृषभ पीपाय
स्वादू रसो मधुपेयो वराय'। इति।

---

१. ऋ० ८।४।८ २. ऋ० ६।४४।२१

मधुपर्कपदेन विधाननिर्देशस्तस्माद्यशःप्राप्तिश्चाथर्ववेदे प्रतिपदमुच्यते—'यथा यशः सोमपीथे मधुपर्के यथा यशः' इतिना।[1] एवं हि श्रुतिषु मधुपर्कार्हणमूलमुपलभ्यते। मूलस्य क्रियानुगुणं प्रतिपादनं तु कल्पाङ्गविषयकमिति कल्पसूत्रेषु सर्वाङ्गो मधुपर्कविध्युपदेशो युज्यत एव। श्रौतेषु सोमादियागेष्वपि मधुपर्कार्हणमावश्यकमेव। 'कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या' इति श्रुतेः श्रौतयागेष्वपि पूर्वं मधुपर्कार्हणस्य नित्यत्वात् क्वचिच्छ्रौतकल्पेषु पद्धतिग्रन्थेषु च मधुपर्कोल्लेखो वर्तते।

मधुपर्कार्हणे गवालम्भनं तु न श्रुत्युल्लेखेषु वर्तत इति तस्य कल्पनमसङ्गतमेव। सूत्रष्वपि तद्विषयकोल्लेखानामर्थसङ्गतिः बहुभिर्विद्वद्भिरिष्टैर्निर्दिष्टैवेत्यलं गतानुगतिकेन। स विमर्शः खलु श्रीसातवलेकरवर्यैः प्रणीते गोज्ञानकोशे, गीताप्रेषतः प्रकाशिते एतद्विषयकसमीक्षाग्रन्थे च साधु निर्णीतस्तत एवावगन्तव्यः। याज्ञवल्क्यस्याभिमतमपि गोप्रदानात्मकं 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इत्यस्य व्याख्याने मिताक्षरकृता स्फुटीकृतमेव[2]। याज्ञिकपीयूषपादा अपि एतद्विषयकसूत्रव्याख्यानानामयथार्थप्रतिपादकत्वं, गोपदस्य च भारतीयधेनुपदार्थव्यतिरिक्तपश्वन्यतमज्ञापकत्वमभिप्रयन्ति। उपर्युक्तसमालोचननिर्णयात् श्रीमत्करपात्रस्वामिवर्यादिशिष्टजनसमाचाराच्च वयमपि गोविशसनविषयस्यावैदिकत्वं, निर्मूलत्वं, निन्द्यत्वं, पातकातिशयजनकत्वञ्च सुदृढं मन्यामहे। अथात्रास्माभिर्वैदिकशास्त्रीयवाङ्मयपर्यालोचनेनावाप्तं मधुपर्कस्वरूप, मधुपर्कशब्दार्थं प्रकृत्य विविच्यते।

## मधुपर्कशब्दार्थः

मधुपर्क इति कर्मणो नामधेयम्। पृची सम्पर्के धातोः[3] पर्कशब्दसिद्धिः। मधुना पर्कः सम्पर्को यस्मिन् (कर्मणि) स मधुपर्क इत्येकं निर्वचनम्। मधुनः पर्कः सम्पर्को येन इति द्वितीयं निर्वचनम्।

प्रथमे निर्वचने मधुशब्दः मुख्यतया मक्षिकासंगृहीतपुष्परसवाची, न मद्यपरः। मद्योपयोगे ब्राह्मण्यहानात्, यज्ञाद्यनुष्ठानेषु सुरापानादेः विगर्हितत्वाच्च। क्षुद्राभिर्मक्षिकाभिः सम्पद्यमानत्वादेतस्य मधुनः क्षौद्रम् इति[4] नामान्तरम्। मधुशब्दश्च कोशटीकाकृद्भिः उणादौ मन धातोर्निष्पाद्यते।

---

१. अ० १०।३।२१
२. या स्मृ० ३।१०९
३. पा० १४६३
४. अ० को० २।९।१०७ रामाश्रमभाष्ये

मन्यते इति मधु । मन ज्ञाने धातुः, दिवादेरात्मनेपदिकान्मनेः 'फलिपाटिन-मिमनिजरां गुक्पटिनाकिधतश्च' इति[1] सूत्रात् उप्रत्ययोऽधिकारागमश्च । धकारे परे 'अनुदात्तोपदेशः' इत्यादिसूत्रेणानुनासिकस्य नकारस्य लोपस्तेन च मधु इति सिद्ध्यति । मधुशब्दः पुंसि क्लीबे च वर्तते,

मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः ।
अर्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधु ॥

इति शाश्वतकोषोक्तेः । अतएव 'यन्मधुनो मधव्यम्'[2] इत्यत्र क्लीबे प्रयोगः, 'मधोर्घृतस्य च याः'[3] इति पुंसि च प्रयोगो दृश्यते । वेदे नुमागमस्य घिसंज्ञाकार्यस्य च सामान्यछान्दसशास्त्रेण विकल्पितत्वात् मध्व[4] इत्यादिषु यण्सहितः प्रयोगः । यद्यपि मधुशब्दस्य नैकेऽर्थाः कोशेषु दृश्यन्ते, यथा—

मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः ।
दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे ॥

इति विश्वः[5] । तथाप्यत्र सर्वगृह्यस्वारस्यात् क्षौद्रस्यैव मधुनो मुख्यतया ग्रहणम् ।

मधुशब्देन मधुररसोऽपि यत्र तत्र बोध्यते । यथा—'मधुमतीर्न इषस्कृधि[6]' इत्यादौ । अत्र हि सितावन्मधुररसो नावगम्यते, किन्तु उपभोग-सारस्ये गौणो मधुशब्दः[7] । अतएव 'मधुमान्नो वनस्पतिः[8], मधुनक्तम्[9]' इत्यादौ उपयोगिसरसतायां मधुशब्दः प्रयोज्यते, यथा सोमविशेषणत्वेना-ज्यविशेषणत्वेन च । अतएव ऐतरेयब्राह्मणे 'एतद्वै मधुदैव्यं यदाज्यम्'[10] इति वाक्येनाज्यस्य दैव्यं मधुत्वमुक्तम् । एवं च मधुपर्कभेदेषु वक्ष्यमाणेषु बहुत्र क्षौद्रमधोः सम्पर्काभावेऽप्याज्यस्य मधोः सम्पर्कः युक्तरूप एव । कुत्र-चिदुदकस्य मधुपर्के संयोगः साक्षात् परम्परया वा दृश्यते, सोऽपि कोश-प्रामाण्याद् युक्तरूपः ।

---

१. उणादि १।१८
२. पा० गृ० १।३।२०
३. मा० सं० १८।६५
४. मा० सं० ९।१८
५. अ० को० ३।३।१०३ रामाश्रमभाष्ये
६. मा० सं० ७।२
७. श० ब्रा० ६ ४।३।२
८. मा० सं० १३।२९
९. मा० सं० १३।२८
१०. ऐ० ब्रा० २।२

मुकुन्दझाबक्शीमहोदयेन तु 'मन्यतेऽतिशयेन जनैरिति मधु' इति[1] व्युत्पादयता औषधानुपानेऽतिशयेन मधुनो व्यवहाराश्रयात् मधुशब्दव्याख्यानमारचितम्। तत्रैव मननीयमिति भट्टभास्करव्युत्पत्तिरुपात्ता।

स्कन्दस्वामी दुर्गाचार्यश्च दैवादिकात् परस्मैपदान् 'मद्' धातोर्मधुशब्दं निर्ब्रूतः। अत्र हि बाहुलकाद्[2] उ प्रत्ययः, दकारस्य धकारादेशश्च निपात्यते। निरुक्तकारो यास्काचार्योऽपि मदेरन्तव्यापत्तिं कृत्वा मधुशब्दं निर्ब्रूते। तथा हि—

'अथाप्यन्तव्यापत्तिर्भवति ओघो मेघो नाधो गाधो वधूर्मध्विति'[3]।

दैवादिकः मदी हर्षे इति पाणिनिः। बक्शी दैवादिकं तृप्त्यर्थं लिखति। वस्तुतस्तु मद तृप्तिसंयोगे इति चुरादिगणे धातुः। निर्वचनं तु दैवादिकाच्चौरादिकादित्युभयोरपि सम्भवति। माद्यति हर्षयतीति मधुः। हर्षस्य पूज्ये वैवाह्यादौ आदरातिशयप्राप्त्या सम्भवेनान्वर्थत्वम्। हर्षस्य सम्पर्ककारित्वाच्च मधुपर्ककर्मान्वर्थम्। तृप्तिसंयोगार्थकाच्चौरादिकान् मदेस्तु मादयते तर्पयतीति मधुः। तृप्तेः सम्पर्को येन कर्मणाऽसौ मधुपर्कः। तृप्तिश्चात्र न क्षुत्पिपासाशान्तिरूपा। किन्तु सश्रद्धं वैधपूजनेनार्च्ये भावात्मिका या तृप्तिः सन्तोषरूपा सात्र गृह्यते। मधुपर्कभक्षणे विनियुक्तमन्त्रेणापि भावोऽयमवगम्यते—

'यन्मधुनो मधव्यं परमं रूपमन्नाद्यम्' इति[4]।

तृप्तेः प्रतीकरूपस्य क्षौद्रस्य मधुनो यन्मधव्यं सन्तोषावहं तृप्तिजनकं तत्त्वमर्च्यत्वात् परमं रूपं भोग्यसाधनत्वादन्नाद्यमस्ति, तेन तत्त्वेनाहं परमः उत्कृष्टः अन्नादः भोग्यशक्तिसम्पन्नश्च भूयासमिति मन्त्रार्थः।

निरुक्ते दैवतकाण्डे मधुशब्दो भिन्नतया निरुक्तः। तत्र हि 'मधु धमतेर्विपरीतस्य' इति उक्तम्[5]। अत्र हि गत्यर्थो धमतिर्धातुर्नैघण्टुकः[6]। पाणिनीयधातुपाठे धातुरयं नास्ति। गतिशीलत्वाच्च मधु इति जलनामधेयम्। तत्तु कोषेणापि संवदति—'मधु क्षौद्रे जले क्षीरे' इत्युक्तेः। निरुक्तप्रक्रियया हि वर्णविपर्ययनियमात् प्रथमस्थानीयस्य धकारस्य

---

१. नि० पृ० ५८ २. पा० ३।४।१
३. नि० २।२।१ ४. पा० गृ० १।३।२०
५. नि० १०।३१ ६. निघण्टुः २।१४

द्वितीयस्थाने स्थितिः, द्वितीयस्य मकारस्य च प्रथमस्थाने स्थितिः। स्वरस्तु यथास्थित एव। तत उणादित्वादुप्रत्यये मधुशब्दः। एवं च धमति गच्छति स्वभाववशादन्तरिक्षे पृथिव्यां वेति मधु जलम्। व्युत्पत्तिरियं क्षौद्रेऽपि समन्वेति। आयुर्वेदज्ञा हि स्वरयौषधं रोगिणोऽङ्गेषु झटिति व्यापयितुं क्षौद्रस्य मधुनः संयोगं कुर्वन्ति। मधुपर्कार्हणेऽपि मधुनः सम्पर्केण दृष्टादृष्ट-फलस्य गतिमत्त्वं वक्तुं शक्यते।

## मधुपर्कार्हणस्य दृष्टादृष्टफलकत्वम्

मन्यते इति मधु इति व्युत्पत्त्या ज्ञानमपि मधुशब्दवाच्यं भवति। मधुपर्काख्ये कर्मणि द्रव्यात्मकस्य क्षौद्रस्य मधुनो विनियोगेऽपि किमर्थमिदं दीयते इति जिज्ञासां व्युत्पत्तिः समाधत्ते। मधु ज्ञानम्, तस्य सम्पर्कः तद्रूपताबोधो येन स मधुपर्क इत्यन्वर्थं कर्मणो नामधेयम्। षण्णां मधुपर्के-णार्हणीयाणां विधानेन पूजने वैवाह्यत्व-ऋत्विक्त्व-राजत्वा-चार्यत्व-प्रियत्व-स्नाकत्वादिबोधः स्वस्मिन् येन कर्मणा भवति तदसौ मधुपर्क इति विशेषः। आत्मनि तादृक्त्वबोधश्च स्वधर्मपालनदाढर्चाय उपयुज्यत एवेति नार्हणस्य वैयर्थ्यम्। एवं च मधुपर्ककर्मणा अर्चनीये स्वात्मबोधो दृष्टं फलम्, ऋत्विगादिष्वाशौचादिनिवृत्तिश्चादृष्टं फलमिति दृष्टादृष्टफलं मधुपर्कार्हण-मस्तीति सुवचम्।

कौषीतकिब्राह्मणे[1] मधुपर्कः आरण्यानां रस उक्तः। रसो हि शरीरे तादृशगुणसंचारायालं भवति। एवं हि आरण्यानां मुनीनां तद्वद्गुणसंचा-राय मधुपर्कः क्रियते। आरण्याश्च मुनयो लोकव्यवहारोपरताः स्वजीवन-मेकनिष्ठतया कर्तव्ये कर्मणि निर्वहन्तीति तेषां जीवनमालक्ष्य कृतमधुपर्कस्य व्यक्तेः सूतकाशौचादिलोकव्यवहारातीतमार्षं जन्म, यावत् कर्म उपैतीति मधुपर्कस्यादृष्टफलकत्वं श्रुत्यापि ज्ञाप्यते।

## मधुपर्कार्हणस्याशौचवारकत्वम्

यज्ञादौ मधुपर्कविधिना वरणोत्तरमृत्विजामाशौचं न भवति। तथा च निर्णीतं रुद्रकल्पद्रुमे—

---

१. कौ० ब्रा० ४।१२

विवाहव्रतयज्ञेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥
प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

इति विष्णूक्तेः । वरणं तु मधुपर्कान्तं ज्ञेयम्, 'गृहीतमधुपर्कस्य यजमानाच्च ऋत्विज' इत्युक्तेः । एतच्च वरणवत्सु कर्मस्वेव । अवरणवत्स्वाधानेष्टिपशुबन्धादिषु तु स्वीयाद्यपदार्थप्रवर्तनोत्तरमेवारम्भः । तथा च दर्शपूर्णमासयोरवृतस्य होतुः सामिधेनीषु प्रवृत्तस्याशौचाभावः ।

केचित्तु व्रतेष्विव दीक्षितानामृत्विजामारब्धोत्सवादीनां च स्वरूपत आरम्भतश्चावश्यकत्वादात्त्यद्यभावेऽप्याशौचाभाव इत्याहुः[1] । परं धर्मसिन्धौ यज्ञादौ मधुपर्कविधिना वरणोत्तरमपि ऋत्विगन्तरालाभादिकेऽनन्यगतौ संकटे एव च मधुपर्कविधिना वृतस्याशौचाभाव उक्तः[2] । एवं जपहोमादावप्यूह्यम् । संकटे नान्दीश्राद्धोत्तरं मौञ्जीविवाहयोर्नाशौचम् । संकटे मधुपर्कोत्तरमृत्विजां नाशौचम् । किन्तु धर्मसिन्धौ हरिवंशश्रवणविधौ यजमानस्य नान्दीश्राद्धविधानेऽपि वाचयितुर्वरणे सत्यपि मधुपर्को नोक्तः[3] । अथ च तत्रैवोक्तम्—'ऋत्विजां मधुपर्कपूजोत्तरं तत्कर्मणि नाशौचम्, तेन येष्वाधानपशुबन्धादिषु मधुपर्को नोक्तस्तेषु कृतेऽपि तांस्त्यक्त्वान्ये ऋत्विजः कार्याः' इति[4] । एतेनेदं फलति यन्मधुपर्कपूजनं न सर्वत्र कर्तव्यमपितु यत्र विहितं तत्रैव कार्यम् । तेनान्यत्र कृतस्य मधुपर्कस्य नाशौचापवादकत्वमिति सिद्ध्यतीति याज्ञिकपीयूषपादाः ।

अतएव रुद्रकल्पद्रुमे[5]—'केचित्तु यद्यपि सकृत्संवत्सरस्य सोमेन यजेत, कृतार्घ्या एवैनं याजयेयुरिति सूत्रे ज्योतिष्टोमे तद्विकारे च ऋत्विजां मधुपर्केणार्हणीयत्वाभिधानान्नेह ( रुद्रयागे ) मधुपर्कमिच्छन्ति' इत्युक्तम् । परं नेदं युक्तम् । वस्तुतस्तु 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्' इत्यत्र 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इतिवत् क्रममात्रविधानं नत्वङ्गत्वविधानम् । अतो वरणमधुपर्कयोरुभयोर्ऋत्विगङ्गत्वम् । तेन स्मार्ते

१. रु० क० पृ० ३८०  २. ध० सि० पृ० २१३
३. ध० सि० पृ० १३३  ४. ध० सि० पृ० ३७१
५. रु० क० पृ० ३०८

मन्त्रवद्वरणाभावेऽपि ऋत्विजो वृत्वा मधुपर्को भवति। समन्त्रकमृत्विग्वरणं तु श्रौतेऽग्निष्टोमे द्रष्टव्यम्। तेनात्र स्मार्ते वरणोत्तरमाशौचादिपाते ऋत्विक्परावृत्तिरित्युक्तम्।

रामकृष्णभट्टस्तु यद्यप्यसकृदितिसूत्रव्याख्याने—'एतत्सूत्रादेवं ज्ञायते सोमयागार्थमेव वृता ऋत्विजोऽर्घ्या नेतरयागार्थमिति यक्ष्यमाणास्त्वृत्विज इत्येनेनैव यागार्थत्वात् सोमेन यक्ष्यमाणा एवार्घ्या इति नियमविधानार्थं पृथगारम्भः' इत्याह[1] स्वबुद्धिबलोदयात्। तत्तु चिन्त्यम्।

## मधुपर्ककालः

कौशिकगृह्ये मधुपर्केणार्हणीयानामर्हणकालविषये चर्चा न दृश्यते। मधुपर्कप्रकरणं द्वादशाध्याये कौशिकेनोपनिबद्धम्। ततः पूर्वं बहूनां कर्मणां प्रतिपादनमेकादशस्वध्यायेषु अस्ति। क्रमेणानेन कल्पयितुं शक्यते, यद् ये वैवाह्यऋत्विगादयः कर्मसु विनियुक्तास्तेषामर्हणं कर्मान्ते कर्तव्यं, मधुपर्काध्यायस्यान्ते निबद्धत्वात्। परमेतन्न युक्तिसहम्। 'स यावतो मन्येत तावत उपादाय विविच्य संपर्याप्य मूलानि च प्रान्तानि च यथाविस्तीर्ण इव स्यादित्युपोत्कृष्य मध्यदेशेऽभि संनह्यति'[2] इत्यासनविधानस्यादृष्टार्थत्वापत्तेः। पाद्यार्घ्ययोरपि कर्मान्ते क्रियमाणत्वेऽदृष्टमेव वक्तव्यं स्यात्। तस्मात् कर्मण आदावेव पूजनमर्थात् सिद्ध्यति। शिष्टसमाचारोऽप्येवम्। अतएव काठकगृह्ये आदित्यदर्शनाचार्यः कर्मान्तार्हणपक्षं समुपस्थापयन् दूषयति—

'केचिद् विवाहस्योपरिष्टात् मधुपर्कविधिः पठ्यत इति तत्रैव (कर्मान्ते) मधुपर्कं ददाति, तदैव कन्यादाने निवृत्तेऽसौ वैवाह्य इति वदन्तः[3]। सर्वदेशसमाचारस्तु विवाहात् पूर्वं मधुपर्कदानम्। अतस्तदेव साधीयः[4]।'

देवपालोऽपि 'आदौ च कर्मणः[5]' इति सूत्रव्याख्याने कर्मादिपक्षमेव समर्थयति, यथा—

'विवाहोत्तरकालमर्हणं विहितमिति यथाचोदितमानुपूर्व्यमिति नयेन विवाहादूर्ध्वमेव मधुपर्कादिदानमिति केचिदाहुः। अतएव च विवाहोत्तरकाले

१. सं० गृ० १।३
२. द्र० कौ० ९०।४
३. द्र० आप० गृ० १३।१ तात्पर्यदर्शनभाष्ये
४. का० गृ० २४।१ भाष्ये
५. का० गृ० २४।३

एवेदमपकृष्य व्याचक्षते। तन्निरासायेदं कर्मण आदावेव पूजनंकर्तव्यम्।' इति।

पारस्करोऽपि विवाहात् पूर्वमेव मधुपर्कविधिं संग्रथयन् कर्मण आदावेव करणीयत्वं ज्ञापयति। 'कृतार्घ्या' एवैनं याजयेयुः'[१] इति सूत्रमपि पक्षममुं समर्थयति।

कर्मण्यविनियुक्तानामाचार्यादीनां पूजनं तु गृहागतानामेव भवति, आचार्ये गृहागते इदं कर्म कुर्वीतेति अथर्वपद्धतौ स्पष्टमुक्तेः। समानन्यायात् संयुक्तातिथ्योरपि गृहागतयोरेवार्चनम्।

गृहागतानामप्येषामाचार्यादीनां प्रत्यागमनं नैव पूजनम्। किन्तु प्रतिसंवत्सरानर्हयेयुरिति पारस्करसूत्रादिषूक्तेः[२] अतीते संवत्सरे एवार्हणम्। प्रतिसंवत्सरानित्यत्र—'प्रतिरत्र अत्यर्थः, अतिसंवत्सरानित्यर्थः। तेन संवत्सरोपर्यागतानाचार्यादीनपि अर्हयेयुः, अर्घदानेन पूजयेयुः, न त्वर्वाक् संवत्सराद्यागतान्' इति जयरामादिव्याख्यानात् अतीते संवत्सरे एवागतानां पूजनम्। संवत्सरशब्दोऽत्र न चान्द्रसौरादिसंवत्सरपरः। तथा सति संवत्सरसमाप्तेः अर्वागागतेभ्यः पुनश्च संवत्सरप्रवृत्त्यनन्तरं झटित्यागतेभ्यः पूजनं प्रसज्येत। अतएवापस्तम्बीयानाकुलायां स्पष्टमेवोक्तम्[३] —

'तेभ्यश्चतुर्भ्यः (आचार्यर्त्विजे श्वशुराय राज्ञे) परिसंवत्सरं विप्रोष्योपतिष्ठद्भ्यः गृहमातिथ्येनागतेभ्यः एतदपचितिकर्म कूर्चादिभोजनान्तं कर्तव्यम्। केन, गृहस्थेनेति।'

आपस्तम्बगृह्ये परिसंवत्सरार्हणविधानार्थमस्ति सूत्रम्—'आचार्यार्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्य एतत् कार्यम्' इति। अत्र हरदत्तेनानाकुलायां द्वितीयं भावं द्योतयितुं द्वेधा सूत्रस्य विभागः कृतः। तथैव च तात्पर्यदर्शने—'आचार्यादिभ्यश्चतुर्भ्यः एतत् कार्यमित्येको योगः।...। तथा परिसंवत्सरादुपतिष्ठद्भ्यः पुनः पुनः, इत्यन्यो योगः।' इति।[४]

---

१. पा० गृ० १।३।३१

२. पा० गृ० १।३।२

३. आप० गृ० १३।१९ भाष्ये

४. आप० गृ० १३।२० भाष्ये

योगविभागेन हि स हरदत्तो विशिष्टं व्याख्यानमारचयति, यत् स्नातको भूत्वा आचार्यम्, अग्निहोत्रादिषु स्वप्रातिनिध्येनोररीकृतमध्वर्य्वाद्यृत्विजम्, विवाहानन्तरं श्वशुरम्, अभिषेकानन्तरं राजानं च निमन्त्र्य गृहमानयित्वा पूजनमिति प्रथमविभागस्वारस्यम्। अथ तेभ्य एव चतुर्भ्यः विप्रोष्य संवत्सरानन्तरमुपतिष्ठद्भ्यः पुन पुनः मधुपर्कार्हणं कर्तव्यमिति च द्वितीयविभागस्य स्वारस्यम्। तथा हि तत्रस्था पंक्तिः—'अत्र केचिदाहुः, आचार्यर्त्विजे श्वशुराय राज्ञ इत्येतत् कार्यमित्येको योगः। अथ परिसंवत्सरादुपतिष्ठद्भ्यश्चायं कार्य इति। तेन विवाहादनन्तरमाचार्यश्वशुराभ्यां निमन्त्र्यापचितिः कर्तव्या। ऋत्विजे च कर्मणि, राज्ञे चाभिषेकानन्तरम्। अथ तेभ्य एव संवत्सरं विप्रोष्योपगतेभ्यश्च कर्तव्यमिति।[1]'

आपस्तम्बीयसूत्रस्य द्वितीयविभागमालक्ष्य संवत्सरमध्येऽपि क्रियमाणे सोमयागे प्रतिसंवत्सरानित्युपदेशात्[2] अनर्हणप्राप्तौ पारस्करः सूत्रयति—'यद्यप्यसकृत् संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः' इति[3]। सोमेनेति सर्वयज्ञोपलक्षणम्। सोऽयं प्रतिसंवत्सरानित्यस्य सोमयाग एवापवादः न तु यक्ष्यमाणास्त्वृत्विज इत्यस्य। अतः स्मार्तेऽपि कर्मणि संवत्सरे असकृदावृत्ते शतचंड्याद्यनुष्ठाने प्रतिप्रयोगमृत्विजां मधुपर्केणार्हणम्।

अतः संवत्सरपूज्येषु सावनः संवत्सरोऽत्र ग्राह्यः। स च षष्टयुत्तरशतत्रयदिवसात्मकः। स्नातकस्य तु पूजनमाचार्यकर्तृकं वेदाध्ययनस्नानाव्यवहितकाले जीवने सकृदेव भवति[4]। वैवाह्यस्य विवाहगुणसम्बन्धात् विवाहकाले एव न त्वन्यदेतिस्पष्टम्। ऋत्विजां मधुपर्कार्हणमतीते संवत्सरे एवेति न नियमः। ऋत्विक्त्वस्य कर्मानुगुणत्वात्, कर्मणश्चावसाने ऋत्विक्त्वाभावात्। अतएव पारस्करेण स्पष्टमेवोक्तम् 'यक्ष्यमाणास्त्वृत्विज' इति।[5]

### मधुपर्कार्हणीयाः

आश्वलायनगृह्यसूत्रे मधुपर्केणार्हणं सप्तानामुपदिष्टम्[6]। तत्र प्रथमः ऋत्विक्, द्वितीयः वैवाह्यो वरः। स च गृह्यसूत्रे उपस्थितस्नातक-

१. आप० गृ० १३।१९ भाष्ये
२. पा० गृ० १।३।२
३. पा० गृ० १।३।३१
४. आप० गृ० १३।१९ भाष्ये
५. पा० गृ० १।३।३
६. आ० गृ० १।२४।१-४

शब्देनोक्तः। उपस्थित इति विशेषणात् वैवाह्यत्वनिश्चये सति तदैव न मधुपर्कार्हणम्, किन्तु कन्याप्रतिग्रहार्थं द्वारि आगतस्यैव वरस्यार्हणं विधेयमिति सूच्यते। पारस्करगृह्यसूत्रमिव स्नातकशब्दोऽत्र ब्रह्मचर्यान्निवृत्तस्यावैवाह्यस्य स्नातकस्य तात्पर्यत्वेन नास्ति। आश्वलायनगृह्ये हि गृहस्थाश्रमोन्मुख एव स्नातकोऽभिप्रेतः, 'महद्वै भूतं स्नातको भवतीति विज्ञायते' इत्युक्तेः[1]। अत्र गार्ग्यनारायणः—

'कथं पुनः स्नातकस्य महत्वम्, उच्यते—

देवैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च।
गृहस्थः सेव्यते यस्मात् तस्मात् श्रेष्ठो गृहाश्रमी॥

इति स्मृतेः' इति। गृहस्थप्रशंसाविलेखनात् बह्वृचसूत्रे स्नातको वैवाह्य एवेति। तृतीयोऽर्हणीयो राजा। स च उपस्थित इति पूर्वानुवृत्तेर्द्वार्यागत एव। आचार्यश्चतुर्थः, श्वशुरः पञ्चमः, पितृव्यः षष्ठः, मातुलश्च सप्तमः। आचार्यादयोऽप्युपस्थिता एव, पूर्वसूत्रानुवृत्तेः। तत्र श्वशुरपितृव्यमातुलानां सम्बन्धित्वेनैकत्वम्। व्यक्तिबहुत्वे तु सर्वेषामुपस्थितानां पूजनम्।

पारस्करगृह्यसूत्रे षण्णां मधुपर्केणार्हणीयत्वमुपदिष्टम्। ते च षट्, आचार्यः ऋत्विक् वैवाह्यो राजा प्रियः स्नातक इति[2]। अत्र विश्वनाथभाष्यकारेण आचार्यादिशब्दा न जातिवाचकाः किन्तु उपाधिरूपा इति संरम्भेण सिद्धान्तितम्। तथोक्तम्—'ननु आचार्यत्वादयो धर्माः जातय एव किं न स्युः? न स्युः, जातिसंकरप्रसङ्गात्, तथाहि आचार्यत्वपरिहारेणान्यत्र ऋत्विक्त्वम्, ऋत्विक्त्वपरिहारेणान्यत्राचार्यत्वम्, एकत्रोभयं सङ्कीर्णं तस्मादुपाधय एते' इति।

अयं भावः—कुम्भकारस्वर्णकारलौहकारादिजातिशब्दाः यथा क्रियाविशेषकर्तृत्वेन रूढाः सन्ति, एवमेव आचार्यादयः षडपि शब्दाः अध्यापनादिक्रियाकर्तृत्वेन जातिरूपाः स्युरिति पूर्वः पक्षः। सिद्धान्तस्तु-अधीतवेदत्वादाचार्यः, प्रियः, स्नातकादिर्वा कदाचित् कस्मिंश्चित् कर्मणि ऋत्विक्त्वेनापि वरीतुं शक्यते। जातिवाचित्वे हि आचार्यादेः ऋत्विक्त्वे जातिसाङ्कर्यं प्रसज्येत, न च जातौ साङ्कर्यं प्रशस्तम्। न वा एवंविधानाम् आचार्यादिजातीनामस्ति जातित्वेन कुत्राप्युल्लेखः। तस्मादाचार्यादयः शब्दा न जातिवाचकाः, किन्तु उपाधय एव। उपाधिश्च कालक्रमेण स्थितिक्रमेण वा उत्पद्यते

१. आ० गृ० ३।९।८ २. पा० गृ० १।३।१

विनश्यति च। क्व चन आचार्यप्रियाद्युपाधिः यावज्जन्म तिष्ठन्नपि न विरुणद्धि। वैवाह्यः स्नातकः इत्येतावुपाधी सकृदेव प्रवर्तेते। द्वितीयादि-विवाहेषु तु वैवाह्यत्वं पुनरस्यावृत्तं भवति। ऋत्विगुपाधिस्तु यजमानैकत्वे विभिन्नकालिकक्रियमाणानुष्ठानेषु पुनः पुनरावर्तते। आचार्यादीनां चतुर्णां विवरणमग्रे कौशिकगृह्यसूत्रानुशीलने वक्ष्यामः।

राजा नाम अभिषेकादिगुणवान् प्रजापालनेऽधिकृतः क्षत्रियः इति हरिहरः। गदाधरस्तु अभिषेकं क्षत्रियत्व चोपेक्ष्य 'राजा दण्डपूर्वकं परिपालनकर्ते'त्युक्त्वा क्षत्रियेतरानपि प्रजापालनकर्तॄन् संगृह्णाति। विश्वनाथस्तु 'राजसूयान्तर्गताभिषेकाभिषिक्तत्वे सति प्रजापालनाधिकृतत्वा-श्रयो राजा' इति वदन् राजसूयाख्यश्रौतयज्ञकरणानन्तरमेव मधुपर्कार्हतां राज्ञः साधयति, न ततः पूर्वम्। पूर्वमीमांसायां तु 'न राजयोगाद् राजत्वं क्षत्रियत्वं तु तत्त्वतः' इति[1] प्रसाध्य क्षत्रियस्यैव राजत्व व्यवस्थापितम्, न तु क्षत्रियेतरस्य राजयोगाद् राजत्वम् निर्णीयते। मन्ये अमुमेव जैमिनीय-सिद्धान्तं दृष्ट्वा विप्रतिपन्नः आपस्तम्बो महर्षिः मधुपर्केणार्हणीयेषु राज्ञा सह स्थपतिमपि पठति। स्थपतिर्नाम देशस्य जातेश्च पालनेऽधिकृतो जनः इति निषादस्थपत्यधिकरणे[2] स्पष्टम्। उभयथापि वंशानुक्रमप्राप्तमेव राजत्वं स्थपतित्वं च मधुपर्कार्हत्वं साधयति। तेन साम्प्रतिकानां निर्वाचने-नागतानां प्रजापालनेऽधिकृतानां मन्त्र्यादीनां, दण्डपूर्वक परिपालनकर्तॄणाम-धिकारिणां वा राजत्वेन स्थपतित्वेन वा नार्हणीयत्वम्।

स्नातको हि विश्वनाथेन 'विद्याव्रतोभयस्नातकत्वाद्यन्यतमोपाध्य-वच्छिन्न' इति लक्षितः। स च वेदमधीत्य ब्रह्मचर्यात् समावृत्त एव भवति। स्नातको हि आचार्येणैव स्नानाव्यवहितकाले समर्चनीयो न त्वन्येन। तथा हि मनुः[3]—

तं प्रतीत स्वधर्मेण ब्रह्मदायहरं पितुः।
स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा॥ इत्याह।

अत्र गोशब्दः मधुपर्कार्हणोपलक्षक इति सर्वेऽपि भाष्यकृतः। आश्वलायने स्नातकशब्दो वैवाह्यपर इति पूर्वमुक्तम्। तेन आश्वलायनीयानाम्-

---

१. जै० न्या० मा० २।३।२          २. का० श्रौ० १।१।१२

३. म० स्मृ० ३।३

आचार्यकर्तृकं स्नातकार्हणं न भवतीति प्रतीमः। बह्वृचां पूजनाभाव-शिष्टाचारोऽपि दृश्यते।

आपस्तम्बगृह्यसूत्रे राजा, स्थपतिः, आचार्यः, ऋत्विक्, श्वशुरः, इत्येते अर्हणीयाः प्रतिपदमुक्ताः[1]। प्रवक्त्रे चित्राय च सकृदर्हणमुक्तम्[2]। बौधायनगृह्यसूत्रे ऋत्विजामर्हणीयत्वेन मधुपर्कविधानमुक्तम्। आचार्यादीना-मन्येषामर्हणीयानामुल्लेखस्तत्र न दृश्यते। लौगाक्षिकाठकवाराहगोभिल-द्राह्यायणखादिरच्छन्दोगसूत्रेषु पारस्करगृह्योक्ता एव षडर्घ्याः। गोभिले प्रियशब्दः अतिथिविशेषणत्वेनोपात्तः। ततश्च प्रियोऽतिथिर्मधुपर्केणार्हणीय इति स्पष्टीभवति।

कौशिकगृह्यसूत्रे पञ्चानां मधुपर्कार्हणाय सूचितम्[3]—'एष आचार्य-कल्प एष ऋत्विक्कल्प एष संयुक्तकल्प एष विवाहकल्प एषोऽतिथिकल्पः' इति। ते च पञ्च आचार्यः, ऋत्विक्, संयुक्तः, वैवाह्यः, अतिथिश्चेति। अत्र कल्पशब्दः मधुपर्कार्हणविधिपरः। आचार्यो नाम उपनयनपूर्वकं वेदाध्यापयिता। तथा च याज्ञवल्क्यः[4]—'उपनीय ददद् वेदमाचार्यः स उदाहृतः' इति। निरुक्ते यास्केन आचार्यशब्दस्य निर्वचनानि त्रीणि कृतानि[5]। तेषु आचारं ग्राहयतीत्येकम्। उपनयनानन्तरं शौचाचारशिक्ष-णस्य प्रथमत्वात् तदेव शिक्षणमालक्ष्य आचारं ग्राहयतीति निर्वचनम्। आचिनोति अर्थानिति द्वितीयं निर्वचनम्। अर्थशब्दोऽत्र शास्त्रीयपदार्थ-परः। शास्त्रीयपदार्थश्च वेदाक्षरग्रहणरूपः, वेदार्थज्ञानरूपः, वैदिकप्रयोग-रूपः, वेदविचाररूपश्चेति बहुधा भवितुमर्हति। सर्वेऽप्यमी पदार्थाः शिष्य-मेधामालक्ष्य आचार्येण स्वविवेकसन्दृब्धरीत्या शिष्यबुद्धावाचीयन्त इति अर्थानामाचयनकर्तृत्वादाचार्य उच्यते। आचिनोति बुद्धिमिति वेति तृतीयं निर्वचनम्। शिष्यस्य बुद्धिमितस्ततो विप्रकीर्णामपि आचार्यः स्वपाठन-कौशलेन संगृह्णातीति बुद्धेराचयनकर्तृत्वादाचार्यत्वम्। त्रीण्यपि निर्वच-नानि परस्परमविरुद्धानि वेदाध्यापयितरि समन्वयन्ति।

ऋत्विग्लक्षणं हरिहरेण श्रौतस्मार्तादिकर्मार्थं वृतो ब्रह्मादिरित्यु-क्तम्। गदाधरस्तु यो दक्षिणापरिक्रीतः कर्माणि करोतीति विशिष्टव्याख्या-

---

१. आप० गृ० १३।१९ २. आप० गृ० १३।२०
३. कौ० गृ० ९२।२२ ४. या० स्मृ० १।३४
५. नि० १।४।१२

नमाह। ऋतौ ऋतौ याजयतीति ऋत्विक्शब्दस्य व्युत्पत्तिः। ऋतुशब्दस्य वीप्सा यजमानस्य कर्तव्यक्रियायाः कालवाचिनी। य ऋतुः कालो जायानामित्यत्र ऋतुशब्दस्य कालवाचित्वेन निरुक्ते उल्लेखात्[1]। न तु वसन्ताद्यृतुवाची ऋतुशब्दः, षट्सु ऋतुषु कस्या अपि विशेषक्रियायाः विध्यभावात्।

श्रौतस्मार्ताद्यनुष्ठेयकर्मसु दक्षिणया परिक्रीतस्य क्रियाकुशलस्य अधीतवेदस्य ब्राह्मणस्य ऋत्विक्त्वं भवितुमर्हति। वैतानाग्निपक्वस्य भक्षप्रतिषेधहेतुना ब्राह्मणानामेवर्त्विक्त्वं, ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोरिति स्वसूत्रे कात्यायनेन साधितम्[2]। स्मार्ते कर्मणि ऋत्विजां गृह्याग्निपक्वस्य लौकिकाग्निपक्वस्य वा जातिं पुरस्कृत्य भक्षणं न निषिध्यते। अथापि याजनस्य ब्राह्मणकर्मसु एवोपदेशाद्, भूदेवत्वेन ब्राह्मणनामेव यज्ञभागित्वश्रुतेः ब्राह्मणानामेवार्त्विज्येऽधिकारः। पौराणेषु तान्त्रिककर्मस्वपि ब्राह्मणानामेवार्त्विज्येऽधिकारः श्रौतस्मार्तवदेव सिद्धं स्वीक्रियते। ब्राह्मणवर्णत्वेनार्त्विज्याधिकारे विहितेऽपि स्त्रीणामार्त्विज्यं न शास्त्रसम्मतम्। ऋत्विग्विशेषणेन पुंस्त्वस्य विवक्षितत्वात्। तेन साम्प्रतिके युगे स्त्रीणां ब्राह्मणेतराणां च ऋत्विक्कर्मणि नियुक्तिरज्ञानमूलिकैव। सा च कर्मवैगुण्येन साकं कर्तृकारकयोरप्युभयोरनिष्टोत्पादनायालं भवति।

संयुक्त इत्यस्य कल्पान्तरोक्तः प्रियोऽर्थः। युजिर् योगे। सम्यक् योगो यस्य स संयुक्तः। स च सौमनस्येन भवितुमर्हति। प्रियशब्दश्च योनिना असम्बद्धस्यैव अभिधाने न सङ्कुचितः, श्वशुरमातुलादीनामपि साहजिकप्रियत्वात्। एवं च गृह्यान्तरोक्ताः[3] श्वशुरपितृव्यमातुलाः अपि प्रियत्वेनानुगृह्यन्ते। कौशिकोक्तः संयुक्तशब्दस्तु प्रियादपि व्यापकः। यदि हि पितृव्यश्वशुरमातुलादयः स्वस्वभाववशात् तत्स्वभाववशाद् वा प्रियत्वेन नानुमन्यन्ते, तथापि योनिसंयुक्तत्वात् तेषां मधुपर्कापचितिः कर्तव्यैवेति कौशिकाचार्यस्य विशेष आशयः संयुक्तशब्देन। श्वशुरादीनां प्रियत्वे संयुक्तत्वेऽपि विवाहात् परमेव तेषामर्चनम्। तत्पूर्वं तु वैवाह्यत्वात् श्वशुर एव वरं समर्चयति विशेषोक्तेः[4]। समानजातीय उत्कृष्टजातीयो वा प्रिय एव मधुपर्कोणार्हणीय इति पारस्करसूत्रभाष्यकर्तॄणामभिमतम्। काठकगृह्ये देवपालस्तु यो यस्य प्रियो गुणोत्कर्षेण इति प्रियशब्दं व्याचख्यौ[5], इति दिक्।

१. नि० १२।४६ २. का० श्रौ० १।२।८ ३. आ० गृ० १।२४।४
४. तु० का० गृ० २४।१ देवपालभाष्ये ५. का० गृ० २४।१ भाष्ये

एष विवाहकल्प इत्यस्य विवाहे मधुपर्कविधिः करणीय इत्यक्षरार्थः । विवाहे वरेण सहागतानां न सर्वेषां वारयात्रिकाणां मधुपर्केणार्हणम्, किन्तु विवाहात् पूर्वं कन्याग्रहीतुर्वरस्यैव पूजनम् । सूत्रान्तरेषु वैवाह्यस्यैव पूजन-विधानैकवाक्यत्वात् शिष्टाचारानुग्रहाच्च ।

अतिथिस्तु, न विद्यते आगमनतिथिर्यस्येति व्युत्पत्त्यार्थापयितव्यः । स च स्ववर्णावरो न भवति चेत्तदा पूज्यः, ऐतरेयब्राह्मणेऽतिथिशब्दस्य महनी-यार्थत्वे सिद्धान्तितत्वात् । एवं चात्रातिथिशब्दो योगरूढ इति ज्ञेयम् ।

**मधुपर्कभेदाः**

विभिन्नेषु गृह्यधर्मसूत्रेषु मधुपर्कद्रव्याणां भेदेन सविशेषं संज्ञाभेदो नावलोक्यते । कौशिकगृह्यसूत्रे तु द्रव्यभेदेन मधुपर्कस्य संज्ञाः काश्चन विशिष्यन्ते । एताश्चात्र संज्ञाः नव, प्रतिसंज्ञं च द्रव्यभेदः । पारस्कर-गृह्यसूत्रे[1] मधुपर्के दधि मधु घृतं चेति त्रीणि द्रव्याणि सन्ति । परं कौशिक-गृह्यसूत्रे नवविधेष्वपि मधुपर्केषु प्रत्येकत्र द्रव्यद्वयमेव दृश्यते । द्रव्यद्वयत्वा-देतेषां बौधायनदिशा द्विवृत्त्वं भवति । अन्यगृह्येष्वपि द्रव्यद्वयात्मको मधुपर्को दृश्यते ।

नवविधातिरिक्ताः केचन अन्येऽपि नानाद्रव्यसम्मिश्रणात्मका मधुपर्काः दृश्यन्ते । तेषां सर्वेषां स्वरूपमग्रे विवेचयिष्यामः । यद्यपि कौशिकोक्ते द्वितीये ऐन्द्रे मधुपर्के 'पायस ऐन्द्रो मधुपर्कः[2]' इत्येकमेव पायसं द्रव्यमुक्तम् । तथापि अन्यत्र द्रव्यद्वयस्य सत्त्वात्, मधुपर्क इति शब्दा-न्तर्गतस्य पर्कशब्दस्य द्रव्यान्तरसाहित्यसूचनात्, अनुक्तमपि 'मधुपर्क'-संज्ञान्वर्थतायै मधुद्रव्यमुपादेयमित्यपि पक्षः । कौशिकोक्तेषु नवसु मधुपर्केषु षष्ठस्य मौसलस्य मधुपर्कस्य कर्मविशेषे सौत्रामण्यां राजसूये च श्रौते यज्ञे व्यवस्थापनं सूत्रेण कृतमस्ति[3] । अन्येषां तु अष्टानां कुत्र करणी-यत्वमिति नोक्तम् । अन्येष्वपि ग्रन्थेषु विभिन्नानां मधुपर्काणां व्यवस्था न दृश्यते । संज्ञाभेदस्य कार्यभेदेनोपयोगस्य सामान्यनियमात् कर्त्तव्य एव-कश्चन विशेषः । तत्र तु प्रतिभाति यदथर्ववेदविदा पुरोहितेन कालभेदं कर्मभेदं व्यक्तिभेदं च समाश्रित्य संज्ञान्वर्थतानुरूपमर्च्यवैभिन्येन द्रव्य-प्रयोगः कर्त्तव्यः ।

१. पा० गृ० १।३।५ २. कौ० गृ० ९२।२ ३. कौ० गृ० ९२।७

अथ प्रत्येकं मधुपर्कसंज्ञा तत्स्वरूपञ्च चिन्त्यते—

### १. ब्राह्ममधुपर्कः

संज्ञेयमर्च्ये ब्रह्मसम्बन्धं सूचयति। ब्रह्मशब्दश्च ब्राह्मणवाच्यपीति सर्वत्र प्रसिद्धम्। 'इदं मे ब्रह्म च क्षत्रं च,[१] ब्रह्म द्रविणं[२], ब्रह्म वै ब्राह्मणः[३], ब्रह्म हि ब्राह्मणः[४]' इत्यादिश्रुतेः। एवं च ब्राह्मणजातिसम्बन्धेनायं मधुपर्कः ब्राह्म इति वक्तुं शक्यते। सूत्रान्तरेषु ब्राह्मणेऽर्च्ये सति पादप्रक्षालने क्रमभेद उक्तः। अत्र क्रमभेदानुक्तावपि द्रव्यभेदेन संज्ञाभेदः। एवं चोभयत्र (अत्र चान्यत्र च) अपि ब्राह्मणेऽर्च्ये वैशिष्ट्यं सिद्ध्यति। ब्राह्मणश्च वैवाह्यर्त्विगतिथित्वेनात्र ग्राह्यः, स्नातकाचार्यादिषु ब्राह्मणेषु द्रव्यान्तरेण मधुपर्कस्याग्रे साध्यमानत्वात्। संज्ञाया अस्याः प्रयोजनान्तरमपि वक्तुं शक्यते। तच्चेत्थम्—अष्टविधेषु विवाहेषु अस्ति ब्राह्मो नाम विवाहः। स एव सम्प्रति समाजे प्रचलति। तस्मिन् विवाहे एष एव मधुपर्को दधि-मध्वात्मकः कर्तव्यः[५] इत्यत्राभिप्रायविशेषः।

अष्टसु विवाहेषु दैवविवाहे यज्ञस्थस्य ऋत्विजः अर्च्यत्वे कन्यादानं भवति। तत्रापि मधुपर्ककर्मणि ब्राह्मो मधुपर्को भवितुमर्हति। 'ब्रह्म हि यज्ञः[६], ब्रह्म वै यज्ञः[७]' इत्यादिषु यज्ञपरत्वेन ब्रह्मशब्ददर्शनात्। ब्राह्मो मधुपर्कोऽयं नामविशेषमनुक्त्वा देवपूजायामपि स्मृतौ प्रकारान्तरेण विधीयते, यथा— 'दधि क्षौद्रमिति द्वाभ्यां मधुपर्कं परे जगुः' इति।[८] कौशिकगृह्यसूत्रे कस्य द्रव्यस्य कस्मिन् मेलनं कर्तव्यमिति नोक्तम्। आश्वलायन-काठक-वाराह-गृह्यसूत्रेषु दधनि मधोः प्रक्षेप उक्तः। बौधायनगृह्ये तु क्रमविपर्यास उक्तः। तत्र हि पात्रे पवित्रान्तरितं मधु कृत्वा ततो दधिप्रक्षेपः। आपस्तम्बगृह्ये कौशिकगृह्यवदेव मेलनक्रमो नोक्तः, संसर्गकरणमेवोक्तम्। कौशिकातिरिक्तेषु उक्तेषु गृह्यसूत्रेषु एतयोर्द्रव्ययोर्ब्राह्मत्वेन संज्ञा न विधीयते। एतदपि विज्ञेयं यत् काठक-वाराहगृह्ययोः मधुपर्कार्चने एतद् द्रव्यद्वयमेवोक्तम्। न तु अदसीयद्रव्ये विकल्प उक्तः। आश्वलायनगृह्ये विकल्प उपलभ्यते, तं च

---

१. मा० सं० ३२.१६ २. मा० सं० १० १०

३. तै० ब्रा० ३।९।१४।२, श० ब्रा० १३।१।५।३

४. श० ब्रा० ५।१।५।२ ५. कौ० गृ० ९२।१

६. श० ब्रा० ५।३।२।४ ७. ऐ० ब्रा० ७।२२

८. आचारेन्दौ देवपूजाप्रकरणे पृ० १४८

पौष्णे मधुपर्के विवेचयिष्यामः। पारस्करातिरिक्तगृह्येषु द्रव्यद्वयात्मकोऽयं मधुपर्कः समादृतः। आपस्तम्बबौधायनाभ्यां पदार्थद्वयात्मकत्वात् द्विवृत्त्वमेतस्य मधुपर्कस्योक्तम्। गोभिलपुत्रेणापि गृह्यासङ्ग्रहे मधुपर्कोऽयमुल्लिखितो विकल्पितश्च।

अत्रापि दधिद्रव्यं नूतनं निर्मलमेव ग्राह्यम्, 'दधि पात्रावशेषं यत् तत्तु स्नाने विवर्जयेत्' इत्यादिनिबन्धोक्तिष्ववशिष्टस्य दध्नः स्नानेऽप्यग्राह्यत्वात्। तत्रापि गोमहिष्यजाक्षीरातिरिक्तस्य दध्नोऽग्राह्यत्वं पाद्मे समुक्तम्[१]। दधित्रयेऽप्येतस्मिन्नुत्तरोत्तरदौर्बल्यमेवावन्तव्यमिति विशेषः।

## २. ऐन्द्रमधुपर्कः

'पायस ऐन्द्रो मधुपर्क' इति कौशिकसूत्रम्।[२] अत्र पायसं द्रव्यमुक्तम्। पयसि संस्कृतं पायसमित्यर्थे पायसशब्दः पयश्शब्दात् 'संस्कृतं भक्षाः[३]' इत्यण्प्रत्यये कृते सति सिद्ध्यति। मुकुटेनामरकोषटीकाकृता पयसा संस्कृतमिति विगृह्य अण्प्रत्ययः कृतः। तत्र करणविभक्तिर्न समीचीना। तत्रोद्धृतमितिपाणिनीयसूत्रात्[४] तत्रेतिपदं 'संस्कृतं भक्षा' इत्यत्रानुवर्तते। ततश्च पयसि संस्कृतमित्यर्थे एव पायसशब्दः सिद्ध्यति। तृतीयाविग्रहे तु सिद्धे ओदने दुग्धसेकेऽपि पायसशब्दो व्यवह्रियेत। स च नाभिजनानुमतः। पयसि संस्कृते परमान्ने (खीरत्वेन भाषायां प्रसिद्धे) पायसशब्दस्य व्यवहारः सर्वजनसमादृतः। अतः पयसि संस्कृतमित्येवं विग्रहः साधुः। एवञ्च पयसि संस्कृतं यदन्नं तत्पायसम्। अन्नस्य बहुविधत्वेऽपि शाल्यन्नमेव लोकव्यवहारादत्र युक्तमस्ति। एवंविधस्य पायसत्वमायुर्वेदेऽपि लक्षितम्, यथा—

अतप्तण्डुलो धौतः परिभृष्टो घृतेन च।
खण्डयुक्तेन दुग्धेन पाचितः पायसो भवेत्[५]॥ इति।

अत्र पायसनिर्माणविधिरेवमुक्तो यत् पूर्वं तण्डुलान् प्रक्षाल्य, घृते किंचिद् भृष्ट्वा, तप्ते दुग्धे प्रक्षिप्य यथावसरं खण्डेन ( सितया ) योजयेदिति। अत्र द्रव्यचतुष्टयं, पयः घृतं तण्डुलाः सिता चेति। अन्येषु मधुपर्केषु अग्निसम्पर्को नास्ति। अग्निपक्वे सिद्धे द्रव्ये पायसशब्दप्रसिद्धेः अग्निसम्पर्कोऽत्रनित्यः। अतः सिद्धं पायसमैन्द्रे मधुपर्के द्रव्यमिति स्पष्टम्।

---

१. पद्मपुराणे कार्तिकमाहात्म्ये सप्तमाध्याये
२. कौ० गृ० ९२।२
३. पा० ४।२।१६
४. पा० ४।२।१४
५. शब्दकल्पद्रुमे

अन्ये विचारकास्तु, पायसमिति सिद्धमेकं द्रव्यम्, तत्र मधुपर्क इति शब्दस्यान्वर्थतायै द्वितीयं मधुद्रव्यमर्थात् उपादेयमिति वदन्ति। एवञ्चास्य द्विवृत्त्वं साधयन्ति। एवंविधो मधुपर्कोऽन्यत्र कुत्रापि न दृश्यते।

पायसशब्दस्यार्थान्तरमपि भवति। पयःशब्दाद् विकारार्थे 'तस्य विकारः[1]' इत्यणप्रत्यये पायसपदं सिद्ध्यति। तच्च पायसं बहुविधम्, पयोविकाराणाम् आमिक्षा, शरः, शुष्कक्षीरम् (खोआ) इत्यादीनां बहुत्वात्। पयोविकृतीनां पायसानां मधुपर्के ग्रहणमत्रैव द्रष्टुं शक्यते। ततश्च सम्प्रति हिन्दीभाषायां प्रसिद्धानां भक्ष्याणां पयोविकाराणाम्, खोआ-( शुष्कक्षीरम् ) मलाई-( शरः ) रबडी-( रववती ) छेना-( आमिक्षा ) इत्यादीनां ग्रहणं कर्तुं शक्यते। दध्नः पयोविकारत्वेऽपि न ग्रहणं, पूर्वस्मिन् ब्राह्मे मधुपर्के दध्नः पृथगुपादानात्। अत्रापि द्विवृत्त्वसम्पादनाय मधुपर्कशब्दान्तर्गतस्य मधुशब्दस्यान्वर्थतायै मधुयोगः कर्त्तव्यः।

ऐन्द्रो मधुपर्क इति संज्ञाविशेषः। एतस्य मधुपर्कस्य प्रयोगः कुत्र कर्त्तव्य इति विचारणायां कौशिकेऽनुपलब्धोऽपि ऐन्द्रशब्दादधिकारी कल्पनीय इति वयं प्रतीमः। इन्द्रो हि देवता। देवस्येन्द्रस्य साक्षान्मधुपर्कप्रदानं कथमपि न सम्भवति। स हि देवेषु क्षत्रियवर्णः। क्षत्रियवर्णो देवताविशेषः स्मार्त्तेषु विधिषु रामकृष्णादिर्दृश्यते, तस्यार्चने च मधुपर्को विधीयते। परं तत्रायं मधुपर्को न कल्पयितुं शक्यते। रामकृष्णादीनामितिहासेषु क्षत्रियतया ज्ञातानामपि तादृक्त्वेन दशरथनन्दनादिमात्रतया देवत्वस्यास्मरणात्, रामकृष्णादीनां मानवदेहपरित्यागानन्तरमवतारस्य मूलभूताया विष्णुशक्तेस्तादृग्वैभवत्वेन भक्तेषु देवरूपेणार्च्यत्वाच्च। एवंविधानां च रामकृष्णाद्यवताराणां न मानवजातिसंश्लिष्टक्षत्रियादिदेवतात्वेन पूजनं भवति, किन्तु सर्वज्ञत्वसर्वशक्तिमत्त्वसर्वैश्वर्यत्वादिभगवद्गुणानुबन्धित्वेन देवत्वबुद्ध्या पूजनं विधीयते। तस्मात् न रामकृष्णाद्यर्चने एतन्मधुपर्कद्रव्योपादानम्। वस्तुतस्तु 'ऐन्द्रो वै राजन्यः[2], द्वयेन वा एष इन्द्रो भवति यच्च क्षत्रियः यदु च यजमानः[3], इन्द्रः क्षत्रम्[4], क्षत्रं वा इन्द्रः[5]' इत्यादिश्रुतिभिः इन्द्रस्य क्षत्रत्वात् ऐन्द्र इत्यस्य क्षात्रस्यान्वर्थत्वाच्च, क्षत्रिये इन्द्रशब्दप्रयोगोऽनुमतः। ततश्च क्षत्रियायाच्र्याय राज्ञेऽयं मधुपर्को देय इति व्यवस्था।

---

१. पा० ४।३।१११३　　२. तै० ब्रा० ३।८।२३।२

३. श० ब्रा० ५।३।५।७　　४. श० ब्रा० १०।४।१।५

५. श० ब्रा० २।५।२।२७; २।५।४।८; ३।९।१।१६; ४।३।३।६ तै०ब्रा० ३।९।१६।६ कौ० ब्रा० १२।८

### ३. सौम्यमधुपर्कः

अत्र मधु घृतं चेति द्वे द्रव्ये[१]। सामान्यतः उभयोः सममानत्वे विषमिवानिष्टं भवतीति लोके प्रसिद्धम्। अतः उभयोरपि विषमा मात्रा कर्तव्या। कौशिकेन सौम्यो मधुपर्कः कुत्र कर्तव्य इति न व्यवस्थापितम्। परं 'पितृलोकः सोमः[२], पितृदैवत्यो वै सोमः[३], पितृदेवत्यः सोमः[४]' इति श्रुतिषु सोमस्य पितृभिः सह सम्बन्धात् सौम्यो मधुपर्कः पित्र्ये कर्मणि देय इति वयं प्रतीमः। पित्र्ये कर्मणि च मधुपर्कः कौशिकेन 'ब्राह्मणो मधुपर्कमाहारयति' इत्यादिनोक्तः[५]। एवंविधः मधुघृतरूपो मधुपर्कः अन्यत्र सूत्रेषु न दृश्यते। अत्र 'सोमो वैष्णवो राजेत्याह तस्याप्सरसो विशः' इतिश्रुत्यनुरोधेन[६] वैश्यायाच्र्याय सौम्यं मधुपर्कमुपदिशन्ति, स्त्रीणां वार्च्यत्वेन प्राप्तानां सौम्यं मधुपर्कमभिप्रयन्ति सम्प्रदायविदः।

### ४. पौष्णमधुपर्कः

पौषणमधुपर्के मन्थः आज्यं चेति द्वे द्रव्ये[७]। मन्थ इति उद्धृतनवनीते जलमिश्रिते दधनि प्रसिद्धिः। एतद्रूपोऽपि मधुपर्कः सूत्रान्तरे न दृश्यते। सूत्रकारेणास्यानुक्तोऽपि विनियोगः वैश्यार्हणे कर्तव्यः 'पूषा विशां विट्पतिः'[८] इति श्रुत्या पूष्णः वैश्यसम्बन्धात्। अथवात्र विट्पदेन प्रजायाः जातिविशेषरहितायास्तुरीयाया वा ग्रहणम्। अतः सामान्यजनस्यार्हणे पौष्णमधुपर्कोपयोगः। अपरे तु 'यथाऽदन्तकायैवम्' इतिशतपथश्रुतिमनुगृह्य दन्तहीनायाच्र्याय पौष्णमधुपर्कमभिप्रयन्ति।

मन्थशब्दः 'साक्तवे नेत्ररोगे च' इति हैमकोशात्[९] सक्तुद्रव्येऽपि प्रयुज्यते। एवं च सक्तुमिश्रितमाज्यमपि पौष्णं मधुपर्के भवितुमर्हति। भर्जितं सत् पिष्टमन्नं सक्तुरित्यभिधीयते। एवं च पेषणसंयोगात् सक्तूनां पौष्णत्वं श्रुत्यनुमतमेव। तथाहि 'तस्मादाहुरदन्तकः पूषा पिष्टभाजन[१०]' इति, तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव[११]' इत्यादिषु स्पष्टम्। सायणाचार्येण, पूष्णः करम्भः[१२] इत्यस्य व्याख्यायां यवपिष्टमाज्यसंयुतमित्युक्तम्।

---

१. कौ० गृ० ९२।३
२. कौ० ब्रा० १६।५
३. श० ब्रा० २।४।२।१२;४।४।२।२
४. श० ब्रा० ३।२।३।१७
५. कौ० गृ० ८३।३२
६. श०ब्रा० १३।४।३।८
७. कौ० गृ० ९२।४
८. तै० ब्रा० २।५।७।४
९. अ० को० रामाश्रमटीकायाम्
१०. गो० ब्रा० उ० १।२
११. श० ब्रा० १।७।४।७
१२. तै० ब्रा० १।५।११।३; श० ब्रा० ४।२।५।२२

यद्यपि अपक्वस्य यवपिष्टस्य भक्षणीयत्वं न भवति, अथाप्येतद् व्याख्यानं सक्तुमिश्रिताज्ये पौष्णे मधुपर्के पिष्टत्वसामान्यमनुगृह्णाति। सक्तवो हि नानाविधैः अन्नैः पृथक् पृथक् निष्पाद्यन्ते। परं मधुपर्के यावः सक्तुरेव ग्राह्यः, तस्य देवहविष्ट्वात् करम्भीयमूलद्रव्यत्वाच्च। गृह्यासङ्ग्रहे तु 'दधिमधुसलिलेषु सक्तवः पृथगेते विहितास्त्रयस्तु मन्थाः' इत्येवं मन्थे मधुद्रव्ययोगः प्रतिपादितः। ततश्चाज्ययोगेन कौशिकोक्तोऽयं मधुपर्कः पदार्थचतुष्टयमयस्तत्पक्षे भवति।

## ५. सारस्वतमधुपर्कः

दुग्धमाज्यं चेति द्वयं सारस्वते मधुपर्के अस्ति।[१] अयमपि मधुपर्कः सूत्रान्तरेषु न दृश्यते। कुत्रायं मधुपर्को भवतीत्यपि सूत्रे नोक्तम्। नाम्ना विद्यासम्बन्धेऽयं प्रयोक्तव्य इति ज्ञायते। तत्र ब्रह्मचर्याश्रमनिवृत्त्यनन्तरं स्नातकार्हणमाचार्यकर्तृकं स्मृतिषु दृश्यते। यवीयसः स्वपाठितस्य शिष्यस्य प्रथमं मधुपर्केणार्हणं न पूज्यत्वनिमित्तं, किन्तु तदीयाधीतविद्यायाः सम्माननाय मधुपर्कोऽयमिति सरस्वतीसम्बन्धः स्पष्टः। तस्मात् तत्र मधुपर्कोऽयमाचार्येण स्नातकाय देय इति वयं भावयामः। आचार्यस्यापि विद्यासम्बन्धात् सारस्वतमधुपर्केणार्हणं युक्तम्।

## ६. मौसलमधुपर्कः

सुरा आज्यं चेति द्रव्यद्वयं मौसले मधुपर्के भवतः[२]। मद्यपानस्य तत्स्पर्शस्य च ब्राह्मणस्य कृते निषिद्धत्वात् ब्राह्मणायाचार्याय नायं मधुपर्को भवितुमर्हति। सूत्रकारेणैतस्य मधुपर्कस्य प्रयोगः स्पष्टमेव कर्मद्वये उक्तः। ते च कर्मणी सौत्रामणी राजसूयश्चेति[३]। उभयत्रापि श्रौतकर्मणोः संसाधितायाः सुरायाः प्रयोगो भवति। राजसूये राज्ञ एवाधिकारः, सौत्रामण्यां तु ब्राह्मणवैश्ययोरपि। तस्मात् राजकर्तृकायां सौत्रामण्यामेवायं मधुपर्कः। ब्राह्मणकर्तृकसौत्रामण्यां तु 'यद् घ्राणभक्षो विहितः सुरायाः' इति भागवतोक्तेः[४] घ्राणभक्ष एव। तस्माद् ब्राह्मणकर्तृकायां सौत्रामण्यां नैतस्य मधुपर्कस्य प्रवेशो युक्तः। नायं मधुपर्कः सूत्रान्तरेषुवर्तते। याज्ञिकपीयूषास्तु रणोपक्रमे स्वपक्षीयायाचार्याय सेनापतेर्मधुपर्के मौसलमभिप्रयन्ति।

---

१. कौ० गृ० ९२।५ २. कौ० गृ० ९२।६

३. कौ० गृ० ९२।७ ४. भा० ११।५।१३

### ७. वारुणमधुपर्कः

अत्र जलमाज्यं चेति द्रव्यद्वयम्[1]। एतस्य कुत्र करणीयतेति सूत्रेऽन्यत्र वोल्लेखो न दृश्यते। दधिक्षीरादिविशेषद्रव्यालाभेऽयं मधुपर्क इति कल्पयितुं शक्यते। अथवा स्मार्तेषु वरुणाधिष्ठितसमुद्रगङ्गानद्यादिपूजनेषु वारुणनामसाम्यान्मधुपर्कोऽयं प्रयोक्तुं युज्यते।

### ८. श्रावणमधुपर्कः

तैलं घृतं चेति द्वयं श्रावणे मधुपर्के भवति[2]। तैलशब्दो हि मुख्यवृत्त्या तिलस्नेहे वर्तते। तस्मादत्र तिलस्नेहस्यैव ग्रहणम्। अस्यापि करणीयतास्थलं सूत्रेऽन्यत्र वा न दृश्यते। कौशिकसूत्रातिरिक्तसूत्रेऽपि नायं मधुपर्कः। प्रस्रवणार्थकात् स्रुधातोः स्रावणशब्दो दन्त्यसकारादिर्भवति। परोक्षप्रियत्वाच्च देवानामृषीणां, दन्त्यसकारस्तालव्यत्वेन नाम्नि व्यवह्रियते। एवञ्च तैलस्याज्यस्योभयोरपि द्रवद्रव्यत्वात् स्रवणद्रव्येषु च मुख्यत्वात् श्रावण इत्यन्वर्थं नाम। अथवा तत्त्ववित्सु श्रमणेष्वतिथित्वेन समागतेषु तेषां सत्काराय श्रामणत्वेन प्रयोजनीयोऽयं मधुपर्कः श्रावणः सूत्रे उक्तः। जैनबौद्धधर्मानुगेषु चतुर्थाश्रमधर्मवत्सु श्रमणशब्दप्रयोगः प्रसिद्धः। याज्ञिकपीयूषास्तु आचार्याय विधर्मित्वे श्रामणोऽयं मधुपर्को देय इत्यभिप्रयन्ति।

### ९. पारिव्राजकमधुपर्कः

अत्र पिण्डस्तैलम् इति द्रव्यद्वयम्[3]। तत्र पिण्डशब्दोऽनेकार्थोऽपि भक्षार्हत्वात् भक्षणीयान्नकवलपरो मन्तव्यः। तैलम् प्रसिद्धं, तिलस्नेहः। नाम्नोऽस्य प्रवृत्तिः कथमिति न ज्ञायते। यौगिकत्वे त्वर्चकस्य यात्रायां वर्तमानस्य अर्च्येऽतिथौ समुपस्थिते दधिद्रव्यादिपदार्थक्षमताविरहे पथ्यदनत्वेन समुपलब्धभक्षणीयमोदकादिपिण्डं तैलञ्चेति द्रव्यमतिथये समुपस्थापनीयमिति कल्प्यते। सन्यासिनां तु मधुपर्केणार्हणं सूत्रेऽन्यत्र वा नोपलभ्यते। तस्मात् शब्दस्य यौगिकीं प्रवृत्तिमुपादाय यात्रिणोऽतिथेरयं मधुपर्क इति प्रतिभाति। नायं मधुपर्कः सूत्रान्तरेषु लभ्यते। अथापि परिव्राजकायाचार्याद्यर्च्याय मधुपर्कोऽयं दातुं युज्यते।

---

१. कौ० गृ० ९२।८ २. कौ० गृ० ९२।९

३. कौ० गृ० ९२।१०

इत्येवं कौशिकोक्ताः द्विवृतो नव मधुपर्काः अस्माभिर्विवृताः। अथ सूत्रान्तरोक्तानामपि अन्यविधानां मधुपर्काणां परिचय उपस्थाप्यते। सूत्रान्तरोक्तानां वक्ष्यमाणानां मधुपर्काणां संज्ञाः विशिष्टा न दृश्यन्ते। अथाप्यस्माभिः स्पष्टप्रतिपत्तये मधुपर्कीयद्रव्यसंख्यामादाय बौधायनापस्तम्बसूत्रोक्तदिशा एकवृत्-द्विवृत्-त्रिवृत्-चतुर्वृत्-पांक्त-विशेषणान्युपादाय मधुपर्काः लिख्यन्ते ।

## एकवृन्मधुपर्कः

बौधायनेन एकस्यैव मधुनः द्रव्यस्य मधुपर्क उक्तः। तत्र केवलमेष विशेषो यत् पवित्रेण मधु पावयित्वा देयमिति। पवित्रं हि कुशपर्णात्मकं द्विदलं त्रिदलं वा भवति। एकवृदयं मधुपर्कः अर्हणीयानुक्तत्वात् सर्वत्र प्रयोक्तुं शक्यते। अयमेकवृन्मधुपर्को बौधायनातिरिक्तसूत्रेषु न दृश्यते, एकविध एव च समुपलभ्यते।

## द्विवृन्मधुपर्काः

यत्र द्रव्यद्वयं मधुपर्के भवति स द्विवृन्मधुपर्कः। कौशिकगृह्ये नवविधा अपि मधुपर्काः द्विवृत एव। एतदतिरिक्ताः केचन द्विवृतो मधुपर्काः सूत्रान्तरेषु दृश्यन्ते। आपस्तम्बगृह्ये दधि सर्पिश्चेति द्रव्यद्वयेनापि मधुपर्क उक्तः। तत्र मध्वलाभे सर्पिषः प्रयोगो विहितः। गोभिलपुत्रेण बौधायनेन च मधुना पयसा चेति द्रव्यद्वयेन द्विवृन्मधुपर्क उपदिष्टः। एवं हि संहृत्य द्वादश द्विवृतो मधुपर्का भवन्ति। बौधायने आपस्तम्बे च सूत्रे द्विवृन्मधुपर्केणार्हणीयस्य कर्मणः जातेर्वा विशेषानुक्तेः सर्वत्रायं प्रयोक्तुं शक्यते। गोभिलपुत्रेण कृतान्नं मधु चेति द्रव्यद्वयेन अन्यत्रानुक्तो द्विवृन्मधुपर्क उक्तः। पारिव्राजकमधुपर्के पिण्डपदेन कृतान्न ग्रहीतव्यम्। तथापि कौशिके तैलग्रहणादयं भिन्नः। गृह्यासङ्ग्रहे तु छन्दोगानां त्रयो द्विवृन्मधुपर्का उक्ताः। तथा हि—

दधनि पयसि वाथवा कृतान्ने मधु दद्यान्मधुपर्कमेतदाहुः।
दधिमधुसलिलेषु सक्तवः पृथगेते विहितास्त्रयस्तु मन्थाः॥ इति।

तदेवं छन्दोगानां दधनि मधु, पयसि मधु, कृतान्ने च मध्विति त्रयो द्विवृन्मधुपर्काः।

**त्रिवृन्मधुपर्कौ**

बौधायनापस्तम्बहिरण्यकेशिकात्यायनगोभिलपुत्रादयः दधि मधु आज्यं चेति द्रव्यत्रयेण त्रिवृतं मधुपर्कमुपदिशन्ति। सम्प्रति मधुपर्कार्हणे दधिमध्वाज्यद्रव्यैः त्रिवृदेव मधुपर्कः श्रौतस्मार्तकर्मसु प्रयुज्यते। दधिमध्वाज्यात्मकोऽयं मधुपर्कः षडर्घ्येषु पारस्करोक्तः कौशिकेतरसर्वगृह्यप्रसिद्धः सर्वत्र प्रचलति। सोऽयं देवपूजायामपि देय इति मन्त्रमहोदधौ—

पात्रे तु मधुपर्कस्य दध्याज्यं च मधु क्षिपेत्।
मूलश्लोकसुधामन्त्रैर्दद्यात्तं वदने प्रभोः॥

इत्येवमुपदिष्टः।[1] बौधायनेन द्विवृति मधुपर्के पयसो द्रव्यस्यापि विधानात् तदनूसृत्य घृतस्य तृतीयस्य द्रव्यस्य निर्देशाद् दधिः पयः घृतं चेति द्रव्यत्रयात्मकस्य मधुपर्कस्यापि त्रिवृत्त्वम्। अयं द्वितीयस्त्रिवृतो भेदः।

**चतुर्वृन्मधुपर्कः**

चतुर्वृतो मधुपर्कस्य बौधायनातिरिक्तसूत्रग्रन्थेषु नोपदेशो दृश्यते। बौधायनेन द्विवृति मधुपर्के दधि पयो वा विकल्पितमस्ति। तदेतद् द्रव्यद्वयमपरिहार्यत्वेन गृह्यते चेत् चतुर्वृन्मधुपर्को भवति। अर्थात् मधु दधि पयः आज्यमिति चत्वारि द्रव्याणि चतुर्वृन्मधुपर्के भवन्ति।

**पाङ्क्तमधुपर्काः**

आपस्तम्बेन दधि मधु घृतं धानाः सक्तवः इति पञ्चानां द्रव्याणां मधुपर्कार्हणयोगे पाङ्क्तमधुपर्कत्वमुक्तम्। वैदिके साहित्ये पंक्तिशब्दः पञ्चसंख्यायां व्यवह्रियते। छन्दःशास्त्रे 'अक्षरपंक्तिः पञ्चकाश्चत्वारः' इत्यत्र पंक्तिच्छन्दसि पञ्चाक्षरसंख्या ग्राह्यत्वेनोपदिष्टेति[2] पंक्तिशब्देन पञ्चसंख्याबोधः 'अष्टौ वसव' इति सूत्रन्यायमनुसृत्य[3] बोध्यः। बौधायनस्तु अपरमपि पाङ्क्तं मधुपर्कमाह। तत्र मधु दधि पयः घृतम् आपः इति पञ्च द्रव्याणि। अर्हणीयविशेषानुक्तेरयमपि सर्वत्र कर्तुं शक्यते। हिरण्यकेशिनस्तु दधि मधु घृतमापः सक्तव इत्येवं पाङ्क्तं मधुपर्कमभिप्रयन्ति त्रिवृन्मधुपर्कस्य विकल्पतया। सोऽयं तृतीयः पाङ्क्तभेदः।[4]

---

१. आचारेन्दौ पृ० १४८ २. पि० सू० ३।४४ ३. पि० सू० १।१५

४. 'अथास्मा आवसथं कल्पयित्वार्घं इति प्राह कुरुतेति प्रत्याह कुर्वन्त्यस्मै त्रिवृतं पाङ्क्तं वा दधि मधु घृतमिति त्रिवृद्दधि मधु घृतमापः सक्तव इति पाङ्क्तः' इति हिरण्यकेशिसूत्रे।

आचारेन्दौ तुरीयविधोऽपि पाङ्क्तो मधुपर्को दृश्यते। तथा हि—[१]

दधि सर्पिर्जलं क्षौद्रं सितेत्येभिस्तु पञ्चभिः।
प्रोच्यते मधुपर्कोऽयं सर्वदेवौघतुष्टिदः॥

इति। अत्र बौधायनोक्तपाङ्क्तमधुपर्कस्य पयसः स्थाने सिता गृहीता वर्तते। तेन दधि मधु घृतं सिता उदकं चेति पञ्चद्रव्याणि भवन्ति। सर्वदेवतुष्टिदः इतिवचनात् देवपूजायामस्य विनियोग इति स्पष्टं निश्चयः। रत्नकोशे जलस्य स्थाने पयः समुपादाय पञ्चमविधः पाङ्क्तो मधुपर्क उक्तः। तथा हि—

इक्षुर्मधु घृतं चैव पयो दधि सहैव तु।
प्रस्थप्रमाणं वा ग्राह्यं मधुपर्कमिहोच्यते॥

इति। अत्र इक्षुशब्देन इक्षुविकृतिः सिता ग्राह्या, पूर्ववचनसमन्वयात् इक्षोः साक्षात् सम्मिश्रणासम्भवाच्च। केचन अत्र रत्नकोशोक्तौ पयःशब्दो न दुग्धवाची किन्तु जलवाच्येव, आचारेन्दौ मानविकल्पे एवैतस्य वचनस्योपन्यासात्, इति ब्रुवते। तदेतच्चिन्त्यम्। आचारेन्दौ पाङ्क्तमधुपर्कस्य पञ्चसु द्रव्याणां मानवैषमप्युक्तम्। यथा—

जलं तु सर्वतः स्वल्पं सिता दधि घृतं समम्।
सर्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत्॥

इति[२]। रत्नकोशोक्तौ तु यथाकथञ्चित् प्राप्त्यनुसारं पञ्चानां वैषम्येण साम्येन वा प्रस्थप्रमाणत्वं सम्पादनीयमिति 'सहैव' इत्यनेन ज्ञाप्यते।

**देवपूजायां मधुपर्कः**

देवपूजायां समर्पणीयानां पदार्थानामुपचार इति संज्ञाविशेषः। तेषां चोपचाराणां संख्यया बहुविधत्वम्। तत्र दशोपचारार्चायां मधुपर्कस्योल्लेखो, यथा ज्ञानमालायाम्[३]—

अर्घ्यः पाद्यमाचमनं मधुपर्कासनानि च।
गन्धादिपञ्चकञ्चेति, उपचारा दशोदिताः॥ इति।

अत्र देवार्चायां पञ्चभिर्द्रव्यैः सम्पादितो मधुपर्कोऽपि आचारेन्दावेव दधिसर्पिर्जलमित्यादिः पूर्वोद्धृतः समुक्तः। अस्मिन् प्रत्येकं द्रव्यमानमपि, जलं

१. आ० इ० पृ० १४७ २. आ० इ० पृ० १४८ ३. आ० इ० पृ० १४३

तु सर्वतः स्वल्पमित्यादि तत्रैव स्मर्यते। अद्यत्वे तु आचारेन्दावुद्धृतस्य रत्नकोशोक्तस्यैव पञ्चवस्तुमधुपर्कस्य देवार्चायां स्नानाय पञ्चामृताभिधानेनोपादानं भवति। मधुपर्कत्वे तु वैशिष्ट्येणोपादानं करणीयम्। रत्नकोशोक्ते पञ्चामृतापरपर्याये पञ्चवस्तुमधुपर्के पय आदाय पञ्च द्रव्याणि। आचारेन्दावुक्तेऽपरे मधुपर्के तु पयसः स्थाने जलमिति भेदः।

देवताया विग्रहे मुखे एतस्य मधुपर्कोपचारस्य समर्पणं भवति। तथा च महोदध्युक्तिः[1]—

पात्रे तु मधुपर्कस्य दध्याज्यं मधु च क्षिपेत्।
मूलश्लोकसुधामन्त्रैर्दद्यात् तं वदने प्रभोः॥

इति। मधुपर्काख्यस्योपचारस्य क्व चन देवार्चायां षोडशस्वप्युपचारेषु गणना दृश्यते।

## मधुपर्कविध्युक्तद्रव्यालाभे प्रतिनिधिः

मधुपर्कविधाने विभिन्नशाखीयगृह्यसूत्रेषु समुक्तानि द्रव्याणि यदि कारणविशेषान्न लभ्यन्ते तदा तेषां प्रतिनिधित्वेन किं द्रव्यं ग्राह्यमित्यपि विचारस्तत्र तत्राचार्यैरुपदिष्टः। तथा हि मधुपर्के दध्यलाभे पयो जलं वा प्रतिनिधिरिति पारस्करगृह्यभाष्ये गदाधरेण निर्णीतम्[2]। कौशिकगृह्ये तु क्षीरापरपर्यायस्य पयसः साहित्ये सारस्वतमधुपर्कत्वं भवति, जलयोगे च वारुणत्वमिति[3] परशाखीयनिर्णयोऽत्राङ्गीकर्तुं न शक्यः। अन्यत्र स्मार्तनिबन्धेष्वपि 'दध्यलाभे पयः कार्यं' इत्येवं पयसो दधिप्रातिनिध्यमुक्तम्। त्रिकाण्डमण्डने तु[4] गोघृतमपि दधिप्रतिनिधित्वेनोक्तम्। तथा हि—

यत्र मुख्यं दधिक्षीरं तत्रापि तदभावतः।
अजादेः क्षीरदध्यादि तदभावे तु गोघृतम्॥ इति।

मधुपर्कविधौ मुख्यं द्रव्यं मधु वर्तते। 'मध्वलाभे घृतं गुडो वेत्याश्वलायनः' इति पारस्करव्याख्यानकृद् गदाधर आह। पारस्करसूत्रे मधुपर्के द्रव्यत्रयमुक्तम्। तत्र घृतमपि प्रमुखं द्रव्यम्। यदि हि तृतीयस्य मधुनः स्थाने घृतं प्रतिनिधीयते तदा मधुपर्के द्रव्यद्वयं भवति दध्याज्यञ्चेति। तस्यैतस्य मध्वाज्यात्मकद्रव्यद्वयकृतस्य मधुपर्कस्य कौशिकगृह्ये सौम्य-

---

१. आ० इ० पृ० १४८ २. पा० गृ० १।३।५ भाष्ये
३. कौ० गृ० ९२।५१, ५४ ४. त्रि० म० २।४९

मधुपर्कत्वमुक्तम्[1]। अतो नायं विधिः कौशिकेषु यथावद्दूरीकर्तुं युज्यते। 'मध्वलाभे तथा गुड' इत्यादिनिबन्धोक्तेराश्वलायनवचनाच्च मध्वलाभे गुडो वैकल्पिकं प्रतिनिधिद्रव्यम्। गुडस्य ग्राह्यतायां कौशिकगृह्यसूत्रेष्वपि संज्ञाविशेषो न दृश्यत इत्ययं पक्षः सर्वशाखीयोपकारको भवति। अथापि पारिव्राजकमधुपर्के पिण्डाख्यं द्रव्यं कौशिकोक्तमस्ति[2]। तदिदं पिण्डद्रव्यं गुड एवेति भवति वितर्कः। वस्तुतस्त्वाचारस्यैव विकल्पे प्रामाण्यम्।

**मधुपर्कपात्रविचारः**

मधुपर्कद्रव्यस्थापनाय कीदृक् किंधातुकं च पात्रमिति कौशिकगृह्ये नोक्तम्। पारस्करगृह्ये तु 'अपिहितं कांस्यं कांस्येन' इति कांस्यः पात्रधातुरुक्तः[3]। आचारेन्दौ तु 'इह कांस्यपात्रं प्रशस्तम्' इत्येवं कांस्यस्य प्राशस्त्यं निर्दिष्टम्, तेनान्यधातुजमपि पात्रं भवतीति ज्ञाप्यते। मधुपर्कपात्रं चेदं किमाकारकमिति न विशेषत उपलभ्यते। सम्प्रति तु वृत्ताकारं कांस्यपात्रं शिष्टाः सङ्गृह्णते। परमर्थववेदीयानां सदण्डं मधुपर्कपात्रमिति 'पुरोमुखं प्राग्दण्डं निदधाति' इतिसूत्रात्प्रतीयते[4]। सम्प्रत्यथर्ववेदीयाः शाखिनोऽपि नैतादृशं पात्रमुपाददते, न च कश्चनैतादृशं पात्रं परिचाययन्ति।

सामवेदीयानां मधुपर्कपात्रविषये कश्चन व्यवस्थितविकल्पः। तेषां निबन्धे तु—

सर्पिषा मधुना दध्ना अर्चयेदर्हयन् सदा।
ऋषिप्रोक्तेन विधिना मधुपर्केण याज्ञिकः॥

कंसे त्रितयमासिच्य कंसेन परिसंवृतम्।
परिश्रितेषु देयः स्यान्मधुपर्क इति ध्रुवम्॥

इत्येवमेको मधुपर्क उक्तः गृह्यासङ्ग्रहे तु मधुपर्कलक्षणम्—

दधनि पयसि वाथवा कृतान्ने मधु दद्यान्मधुपर्कमेतदाहुः।
दधिमधुसलिलेषु सक्तवः पृथगेते विहितास्त्रयस्तु मन्थाः॥

इत्येवमुक्त्वा त्रिविधा अन्येऽपि मधुपर्काः समुपदिष्टाः। तदेवं सर्पिर्मधु दधि, दधनि मधु, पयसि मधु, कृतान्ने च मधु, इति छन्दोगानां स्वशाखाप-

1. कौ० गृ० ९२।४९
2. कौ० गृ० ९२।५६
3. पा० गृ० १।३।५
4. कौ० गृ० ९१।३

रिभाषितश्चतुर्विधो मधुपर्को भवति। तत्र प्रथमविधो द्वितीयविधश्च मधुपर्कः कंसस्थः कंसपरिवृतश्च भवति। शिष्टयोर्द्वयोः पुनर्नैष नियमः। प्रथमे मधुपर्के 'कंसे त्रितयमासिच्य' इत्यादिना त्रित्वविशिष्ट एव तद्विधानात्। यथा खल्वभिक्रमणं प्रयाजमात्रस्यैवाङ्गम् नानुयाजादीनाम्, तथैवात्राप्यवगन्तव्यम्। द्वितीयविधमधुपर्कविषये त्वाह कात्यायनः कर्मप्रदीपे—

साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम्।
अर्घ्यं, दधिमधुभ्याञ्च मधुपर्को विधीयते॥

कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत्॥ इति।

तदत्र प्रथमश्लोकार्धेनार्घ्यमुत्तरार्द्धेन मधुपर्कञ्च परिभाष्य द्वितीयश्लोकेन यथाक्रमं तयोरर्पणप्रकारः समुपदिष्टः। सोऽयं मधुपर्कशब्दः प्रथमश्लोकोक्तमेव मधुपर्कं परामृशति, न त्वन्यम्। प्रकृतप्रत्ययश्च न्याय्य इति शास्त्रतात्पर्यविदां सिद्धान्तादितरथा प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गाच्च। न च तत्र प्रमाणान्यतरदपि पश्यामः।

रघुनन्दनस्तु छन्दोगोऽप्येतच्चतुष्टयवैलक्षण्यमजानानः साक्षतमिति वचनं लिखित्वा, दधिमधुमात्रेण मधुपर्काभिधान घृतासम्भवपरमिति परिकल्प्य तत्सम्भवे गोभिल इत्यभिधाय च, 'मधुपर्कं दधि मधु घृतमपिहितं कांस्यं कांस्येन' इति पारस्करसूत्र 'पिहितं कांस्यस्थम्' इत्येवमाकुलीकृत्य च पूर्ववचने पात्रानुपदेशात् कांस्यपात्रं विनापि मधुपर्को दीयत इति वर्णयाञ्चकार।

## मधुपर्के भक्षणविचारः

मधुपर्कविधौ मधुपर्कद्रव्यस्याचार्येण भक्षणं गृह्यकल्पेषु स्वस्वशाखीयव्यवस्थया सङ्ख्यानिर्देशपुरस्सरमुक्तम्। तत्रापि कुत्रचित् सूत्रेषु पिबतिशब्दप्रयोगः[1], कुत्रचिच्चाश्नातिप्रयोगः[2]। केषुचिद् गृह्येषु सूत्रे मन्त्रे वा भक्षतेः प्रयोगोऽप्यस्ति[3]। कुत्रचिदेकस्मिन्नेव गृह्ये सूत्रे पिबतिशब्दप्रयोगान्मन्त्रे भक्षशब्दश्रुतेश्च[4] सन्देहोऽत्र सञ्जायते, किमयं मधुपर्कः

१. खा० गृ० १५ सूत्रे
२. पा० गृ० १।३।२०; बौ० गृ० ३९ सूत्रे; आप० गृ० ५।१३।१३, का० गृ० २४। १३, वा० गृ० १३ सूत्रे; कौ० गृ० ९१।५
३. आ० गृ० १।२४।१५
४. गो० गृ० ४।१०।१५

पात्रेण पातव्य उत हस्तेन भक्षणीय इति । तत्रैक आहुः—मन्त्रे भक्षशब्दश्रुतेः शिष्टाचारे प्रसिद्धेश्च हस्तेन भक्षणीय इति । परमत्र मन्त्रोक्तेः स्फुटीकरणं केचनाचार्याः सूत्रेणैव मन्यन्ते । तथा च सायणार्यः 'अयं यः सौत्रिको विनियोगस्तेन कतिपयमन्त्राणां तात्पर्यं समीचीनमाविर्भवतीत्यसंशयम्' इत्याह[1] । इदमेवावधार्य अपरे तु—मन्त्राणामभिधायकत्वात् प्रसिद्धेश्चानैकान्तिकत्वाद् विधेर्बलीयस्त्वाच्च पात्रेण पातव्य इत्याहुः । परमत्र नेयं क्रिया स्वशाखीयधिया आग्रहेण वा निर्णेयेति सर्वशाखीयगृह्यकल्पपर्यालोडनेन वयं प्रतीमः । अतो मधुनः संयोगाद् द्रवश्चेन्मधुपर्कः स्यात्तदा पात्रेण पातव्योऽथ दध्नः काठिन्यात् पानानुपपत्तिश्चेद्धस्तेन भक्षणीय इत्येवं व्यवस्थाविकल्पेनोभयानुग्रहो भवति । तदेतद्विचार्य यथार्हं समाधेयमिति विमर्शः ।

अथ चासकृन्मधुपर्कभक्षणं प्रायशो गृह्यसूत्रेषूपदिष्टम् । अत्र सन्दिह्यते यन्मध्ये आचमनं प्राप्नोति न वेति । अन्यथा, उच्छिष्टः कथं द्वितीयं तृतीयं तदुत्तरं वा पानं करिष्यति, मन्त्रं वोच्छिष्टः पठिष्यतीत्यत्रोच्यते । प्रायः सर्वेषु गृह्यसूत्रेषु यथासंख्यं मधुपर्कभक्षणानन्तरमेवाचमनस्योपदेशः[2] । अतः सूत्रे उत्तरत्र आचान्तोदकायेति कथनादिहोच्छिष्टतैव न भवतीत्यवगच्छामः । तस्मात् प्राणाग्निहोत्रवत् सोमभक्षणवच्चाकृताचमनस्यैव मन्त्रपाठः स्यादिति विचारः । वस्तुतस्तु मधुपर्के नोच्छिष्टत्वम् । तथा च गदाधरभाष्ये—

ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥

इत्युक्तम् । अत एव गृह्यकारिकायाम् 'उच्छिष्टस्य भवेन्मन्त्रोच्चारणं मनुरब्रवीत्' इत्येवं प्रतिपादितम् । अत्रोच्छिष्टत्वोक्तिः स्थूलदृष्टया, न तु पारमार्थिकीत्यवगन्तव्यम् ।

## मधुपर्के शाखाविचारः

मधुपर्कविधावेकोऽर्चयिता द्वितीयश्चार्च्यो भवति । उभयोः समशाखित्वे

---

१. अथर्वसं० १२।३ भाष्ये

२. आ० गृ० १।२४।२३; पा० गृ० १।३।२६; का० गृ० २४।१४; वा० गृ० १५ सूत्रे; गो० गृ० ४।१०।१८

न कश्चन विचारः। भिन्नशाखीयत्वे तु कस्य वैदिकीं शाखामाश्रित्य मधुपर्क-प्रयोगः करणीय इति विचारे धर्मसिन्धूक्तम्—

वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः।
मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि॥

इतिवचनमनुग्राहकं भवति। यद्यपीयमुक्तिर्विवाहं प्रकृत्योक्ता, तथापि 'अन्यशाखेऽपि दातरि' इत्येवमुक्त्या सर्वत्र ग्रहीतृशाखयैव मधुपर्कार्हणं दात्रा कर्तव्यमिति ज्ञाप्यते।

तत्रापि यज्ञादावृत्विजामर्च्यानां बहुत्वाद् विभिन्नशाखीयत्वाच्च नायं विधिः समन्वेति। अतस्तदर्थं कश्चनान्यो विमर्शः। ऋत्विजस्तु भिन्न-शाखीया अप्याचार्यब्रह्मसदस्यहोत्रादयः सर्वे मधुपर्केण पूज्या एव। 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्' इत्याश्वलायनोक्तेः, 'सम्पूज्य मधुपर्केण ऋत्विजः कर्म कारयेत्' इति विश्वामित्रोक्तेश्च। य ऋत्विक् यच्छाखीयं कर्म करोति तच्छाखोक्तेन प्रकारेण काण्डानुसमयेन मधुपर्कं कुर्वन्ति यायजूकाः केचित्। परे तु यजमानशाखोक्तेन विधानेनार्चयन्ति। परमत्र यजमानेन स्वशा-खीयाः पदार्थाः, ऋत्विग्भिश्च स्वस्वशाखीयाः पदार्थाः अनेकेष्वृत्विक्षु सत्सु पदार्थानुसमयेनानुष्ठेया इति युक्तम्। तत्तच्छाखाध्ययनजन्यज्ञानस्याङ्गत्वा-देकप्रयोगविधिपरिग्रहाच्च। एवं हि यज्ञादावर्च्यार्चकयोरुभयोरपि शाखाभ्यां विधिः सम्पादनीय इति विशेषः।

## आथर्वणिकमधुपर्के विशेषः

मधुपर्कविधानमाथर्वणिकानां विशिष्यते। तदर्थं कौशिकगृह्ये एकः सम्पूर्णोऽध्यायः। नैवंविधप्रामुख्येणान्यसूत्रेषु मधुपर्कविधानमुपदिष्ट-मित्याथर्वणिकानामयं विशिष्टः कश्चनोपक्रमः। अत्राध्याये तिस्रः कण्डिका-स्तास्वाचार्यादिभ्यो देयो मधुपर्क उक्तः। मधुपर्के कौशिकोक्ते मुख्यानि सम्भाराणीमान्युपकल्पनीयानि भवन्ति—दर्भाः, विष्टराः, पाद्यम्, आसनम्, अर्घ्यम्, आचमनीयम्, मधुपर्कः, दातव्या गौः, उपासकाः, अन्नाहाराः, स्नानानुलेपनमाल्याभ्यञ्जनादीनि च। अर्चयिता पूर्वं कुशानाहार्यं विष्टरान् कारयित्वा आसनञ्च सम्पाद्य पूज्याय पाद्यं प्रयच्छति। स च 'हिरण्यवर्णाः' इत्यादिमन्त्रैः पूर्वं दक्षिणं ततो वामं पादं मन्त्रेण प्रक्षाल्यानुमन्त्रयते, आसनं ददाति पूज्यश्च मन्त्रेणोपविशति। ततोऽर्घ्यं ददाति पूज्यो गृह्णाति च। तूष्णीमर्घ्यात्मं निनयति, ललाटं स्पृशति च मन्त्रेण। ततो दाता आचमनीयं

ददाति, आचान्ताय मधुपर्कं ददाति। मधुपर्कपात्रस्य नीचैर्द्वे कुशपत्रे अपिधानोपरि चैकं कुशपत्रं भवति। अनुमन्त्र्य मधुपर्कविक्षणं, पृथिव्यां निधानमङ्गुलिभ्यां चालनमनामिकाङ्गुष्ठाभ्यां सङ्गृह्य द्वादशकृत्वः प्राशनं च करोति पूज्यः। अवशिष्टस्य ब्राह्मणाय वृषलाय वा दानं भवति। ततो गोः समर्पणमभिमन्त्र्य चोत्सर्गो, गच्छन्त्याः गोर्मन्त्रेणाभिमन्त्रणञ्च भवति। उपासकपक्षे तु स्वधित्यादिदानं, स्नानानुलेपनमाल्याभ्यञ्जनादि-समर्पणमुपासकानां प्रतिमन्त्रणमन्नाहाराणां प्रतिमन्त्रणमन्नहोमश्चैष अथर्व-वेदीयमधुपर्कविधेः प्रयोगक्रमः।

आथर्वणिकानां नवविधमधुपर्कास्तु याज्ञिकपीयूषपादैरेवमुक्ताः—

ब्राह्मैन्द्रसौम्यपौष्णाश्च तथा सारस्वतोऽपि वै।
मौसलो वारुणश्चापि श्रावणः पुनरष्टमः।
नवैव मधुपर्काः स्युः पारिव्राजकोऽत्रान्तिमः॥ इति।

एतेषां नवानां द्रव्यभेदेन संज्ञापनमस्ति। कौशिकानुसारेण मधुपर्क-विधिः साङ्गो देवभद्रेणैव समुक्त इत्ययं विशिष्यते। यद्यपि हर्षनाथझाशर्मणा जलाशयोत्सर्गपद्धतौ चातुश्चरणमधुपर्कप्रकरणे शौनकानुसारेण प्रतिज्ञातो मधुपर्कविधिः कश्चनोक्तः। परं तत्र शौनकानुसारेणेतिकथनमथर्वसंहिता-भिप्रायमेव, न तु तदीयसूत्राभिप्रायम्। तत्र हर्षनाथपद्धतावाथर्वणिकानां मधुपर्कप्रयोगे विशेषाः केचन सन्दृष्टास्तेऽत्रोदाहरणार्थं सङ्गृह्यन्ते।

१. अत्र यजमानो दर्भानन्यतः समानाय्य समुपयुंक्ते।

२. शाखान्तरे कृतस्य विष्टरस्यार्हणीयाय दानं भवति। अत्र तु विष्टरकरणमप्यर्हणीयकर्तृकम्। तदत्र दातुः प्रैषः विष्टरान् कुर्विति। नैवमन्यत्र प्रैषो दृष्टचरः।

३. अन्यशाखासु न विष्टरत्रितयम्। शुक्लयाजुषाणां तु विष्टरद्वय-मेव। अत्र तु—एकशाखः प्रथमः पाद्यविष्टरः, द्विशाखो द्वितीय आसन-विष्टरः, त्रिशाखस्तृतीयश्च मधुपर्कविष्टर इति विष्टरत्रयम्।

४. अन्यशाखासु विष्टरकरणे न मन्त्रः। अत्र तु विष्टरत्रयस्य निर्माणे पृथक्पृथङ्मन्त्रः।

५. पद्धत्या एवं ज्ञायते यदर्हणीयः स्वकृतान् त्रीनपि विष्टरान् दात्रे दद्यात्, दाता चार्हणीयं पश्यन् तद्धस्ते अर्पयेदिति क्रमः। अन्यत्र तु आत्मना निर्मितस्यार्हणयव्यतिरिक्तेन वा निर्मापितस्य स्वहस्तेन दानं भवति।

६. अन्यशाखासु विष्टरदाने 'विष्टरः प्रतिगृह्यताम्' इति यजमानोक्तौ 'विष्टरं प्रतिगृह्णामि' इतिवाक्येन ग्रहणम्। अत्र तु दातृप्रतिग्रहीत्रोर्नोक्तिप्रत्युक्ती। किन्तु यजमानस्य विष्टरविसर्गो मन्त्रेणोक्तः।

एवंविधा बहवो विशेषाः सन्त्याथर्वणिके मधुपर्के। ते च देवभद्रकृतप्रयोगे तद्व्याख्याने च तत्र तत्र द्रष्टव्याः।

**मधुपर्कपूर्वक्रियाविचारः**

आश्वलायनेन वरणानन्तरं मधुपर्कार्चनमुक्तमस्ति[1]। मधुपर्कार्हणीयेषु ऋत्विग्वैवाह्यातिरिक्तानां वरणासम्भवात् शिष्टाचारेऽपि वरणानुपलम्भाच्च ऋत्विग्वैवाह्ययोरेव वरणं कृत्वा मधुपर्कार्चनं कर्तव्यम्। अन्येषां तु वरणमन्तरैव मधुपर्कार्चनम्। वरणीययोरपि ऋत्विग्वैवाह्ययोर्मध्ये वरस्य मधुपर्कार्हणाव्यवहितपूर्वकालमेव वरणं न क्रियते। ज्योतिःशास्त्रे वरवरणस्य स्वतन्त्रमुहूर्त्तविधानात् 'धरणिदेवोऽथवा कन्यकासोदरः'[2] इत्यादिनिर्देशाच्च कन्यादातुः प्रतिनिधित्वेन कन्याभ्राता नियुक्तो ब्राह्मणो वा वरगृहं गत्वा वरणं करोति। दैवादिविवाहेषु तु पूर्वनिश्चयाभावात् मधुपर्कात् पूर्वं वरणं भवितुमर्हति।

आपस्तम्बगृह्यसूत्रे मधुपर्कोपक्रमात् पूर्वम् 'अथैतदपरं तूष्णीमेव तीर्थे स्नात्वा तूष्णीं समिधमादधाति, यत्रास्मा अपचितिं कुर्वन्ति तत्कूर्चे उपविशति'[3] इत्युक्तौ स्नानं समिदाधानं च स्नातकाभिप्रायेण ज्ञातव्यम्। तीर्थमिति सञ्चरप्रदेशः, न तु गंगादिरेव, सञ्चरप्रदेशे तीर्थशब्दस्य श्रौतकर्मणि व्यवहारात्। ततश्च स्नातकस्य स्नानानन्तरमन्तिमं समिदाधानं कृतवतोऽव्यवहितकाले मधुपर्कार्हणमायाति। स्नातकातिरिक्तानां स्नानं समिदाधानं चार्थाल्लुप्यते, मधुपर्कानङ्गत्वादुपवेशनप्रभृति मधुपर्कार्चनकर्मण उपक्रमाच्च।

लौगाक्षिकाठकगृह्ययोः 'आदौ च कर्मणः'[4] इति मधुपर्कार्चनकर्मण्युक्तत्वात् कर्मणो मुख्याङ्गात् पूर्वमृत्विगादीनां मधुपर्केणार्हणम्। लोकेऽपि मण्डपप्रवेशात् पूर्वमेव पञ्चाङ्गस्थले गणेशपूजनादि वरणान्तं कर्म सम्पाद्य ऋत्विजां बहिर्मधुपर्को भवति, मण्डपप्रवेशस्य मुख्यकर्माधिकरणात्। कुत्रचिन्मण्डपे प्रवेशानन्तरं मधुपर्कार्हणं तु सौविध्यमूलकमेव, न तु

१. आ० गृ० १।२४।१ २. मु० चि० ६।११
३. आप० गृ० ५।१३।२ ४. का० गृ० २४।३

शास्त्रमूलकम्। गोभिलगृह्यसूत्रे मधुपर्कार्हणात् पूर्वमर्चनीयस्य स्वागतार्थमभिमुखगमनं, गमनात् पूर्वं चार्हणदेशे गोर्बन्धनमुक्तम्[1]। एतद्यथासम्प्रदायं बोध्यम्। कौशिकगृह्यसूत्रे न क्वापि मधुपर्कात् पूर्वं करणीया क्रिया प्रतिपादिता वर्तते। अतो यथासम्भवं यथाचारं च शाखान्तरीयपदार्थः परिग्रहीतुं शक्यत इत्यलं पल्लवितेन।

मधुपर्कविषयकाः शाखावैभिन्येन विभिन्ना विचाराः सम्प्रत्यप्यनुसन्धेयतामर्हन्तीति समवधाय शोधार्थिभिरत्र प्रयतनीयम्। अस्माभिस्त्वत्र दिगेव समनुगता यावदालोकम्।

## देवभद्रकृतो मधुपर्कप्रयोगः

कौशिकगृह्ये मधुपर्कविधिर्द्वादशाध्याये कृत्स्नेऽपि सुविशदमुपदिष्टोऽर्थवेदीयः सर्वानपि गृह्यान्तरोक्तमधुपर्कविधीनतिशेते। कौशिकगृह्यानुसारेणाथर्ववेदीयमधुपर्कप्रयोगो देवभद्रकृतो मया पूज्यपितृचरणानां गुरुवर्याणां वेदविद्यावारिधीनां डा०गोपालचन्द्रमिश्रपादानामाज्ञयाथर्ववेदाध्ययने प्रवृत्तेन शोधकार्यप्रसङ्गे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीये सरस्वतीभवनग्रन्थागारे सन्दृष्टः। आदिष्टश्चाहं सानुसन्धानं तत्प्रकाशनाय पितृचरणैः। तेषामशेषवपुषामाशीर्भिरेवाहमिमं समपादयमाथर्वणिकं मधुपर्कप्रयोगम्। अत्र यथामति प्रस्तुतायां व्याख्यायां विशिष्टानां सूत्रोक्तपदानामर्थः प्रयोगोपयुक्तमन्त्राणामर्थश्चोपवर्णितः। यत्र तत्र भावविशेषस्य क्रियाविशेषस्य चाथर्वणिकेन पथा समालोचनमपि विहितम्। देवभद्रीयमूलप्रयोगे समुद्धृतानि सूत्रस्थलानि भिन्नाक्षरैर्मुद्रितानि स्पष्टप्रतिपत्तिसौकर्यार्थम्। सोऽयमस्मत्प्रणीतो व्याख्यानग्रन्थः, देवभद्रीयाथर्वमधुपर्कप्रयोगस्याप्रकाशितस्य सम्पादनक्रमश्च मधुपर्कविषयजिज्ञासूनामुपकाराय भवितुमर्हतीतिधिया अत्रोपस्थाप्यते।

---

१. गो० गृ० ४।१०।१-२

अथ देवभद्रविरचितः

# अथर्ववेदीयमधुपर्कप्रयोगः

श्रीगणेशाय नमः

**सूत्रव्याख्यां पुरा कृत्वा देवभद्रेण धीमता ।**
**अथर्वमधुपर्कस्य प्रयोगोऽथ वितन्यते ॥**

---

अथ अथर्ववेदीयमधुपर्कप्रयोगस्य

## पीयूषकणिकाव्याख्या

गणपतिमीशं करुणावरुणालयमन्तरायपूगहरम् ।
श्रीश्यामं भगवन्तं भवभयखेदच्छिदं वन्दे ॥ १ ॥

यस्माच्चातुर्वर्ण्यं चत्वारश्चाश्रमास्त्रयो लोकाः ।
सिध्यन्ति यज्ञपुंस्वाः कालत्रितयं नमोऽस्तु वेदाय ॥ २ ॥
यद्विज्ञानमवाप्यैतत्सर्वं प्रवर्त्ततेऽस्माकम् ।
विद्वत्तिलकं नमामि वैदिकसूर्यं श्रीगुरुं पितरम् ॥ ३ ॥
अथ कौशिकगृह्योक्तमधुपर्कविधेरिह ।
विज्ञानामुपयोगाय व्याख्यानं क्रियते मया ॥ ४ ॥

पदानि कौशिकगृह्ये विशिष्टार्थानि कानिचित् ।
तेषामर्थस्तथा सम्यग् बोधायात्र वितन्यते ॥ ५ ॥

कौशिकोक्ताश्च ये मन्त्राः प्रतीकत उदाहृताः ।
वेदान्तरीया वा सन्ति तेषामर्थोऽपि लिख्यते ॥ ६ ॥

कौशिकाचार्यगृह्योक्तमधुपर्केऽपि कानिचित् ।
सूत्राणि देवभद्रेण न व्याख्यातानि तान्यथ ॥ ७ ॥
व्याख्यास्ये सुखबोधाय ग्रन्थपूर्णत्वहेतवे ।
मिश्रोऽहं श्रीकिशोराख्यो वेदविद्वद्वशंवदः ॥ ८ ॥

वस्तुनिर्देशात्मकं मङ्गलमाचरति सूत्रव्याख्यामिति । पुरा कृत्वेति न पूर्णतया कौशिकगृह्यव्याख्यानाभिप्रायम्, किन्तु अस्मिन् मधुपर्कप्रयोग एव सूत्रव्याख्यानं पूर्वं कृत्वा ततः पद्धत्युपयुक्तः शब्दप्रयोग इत्येवमभिप्रेत्य । प्रयोगान्ते स्वस्य माध्यन्दिनीयत्वज्ञापनात् । ननु माध्यन्दिनीयोऽप्युवटाचार्यः ऋग्वेदीयं प्रतिशाख्यं सर्वं यथा व्याकार्षीत्तथा देवभद्रोऽपि परशाखीयं

मधुपर्कमाहारयिष्यन् दर्भानाहारयति ।

कौशिकसूत्रं व्याख्यातवानिति । न तथा सम्भावयितुं शक्यते, ग्रन्थानुपलब्धेः । व्याख्या चात्र न प्रतिपदविश्लेषणात्मिका, किन्तु अपेक्षितांशपूरिकैव, तथाऽत्र दर्शनात् ।

मधुपर्क इति कर्मणः संज्ञा । आहारयिष्यन् सम्प्रतिपादयिष्यन् दददित्यर्थः । अथवा अत्र आङुपसर्ग उपार्थो बोद्धव्यः । तेनोपहारयिष्यन् समीपे स्वत्वेन सम्प्रापयिष्यन्नित्यर्थः । दर्भानाहारयति स्वपुरुषैः । अथवा आहारयति परेणानाय्य ददाति । अर्हणीये समागतेऽन्येनैवार्हणपदार्थानामाहरणं मुख्यः पक्ष इति द्योतयितुं ण्यन्तप्रयोगः सर्वत्र । पुरुषान्तरालाभे स्वतनयादिकौटुम्बिकैरिति मध्यमः पक्षः । तदनुपस्थितौ स्वयमेवाहरणमिति कनिष्ठः पक्षः । दर्भा अत्र तात्कालिका नियतदिनोत्पाटिता वा ग्रहीतुं शक्यन्ते ।

तथाहि— 'मासिमास्युद्धृता दर्भा मासिमास्येव चोदिताः' इति यमः । षट्त्रिंशन्मते—'मासेन स्यादमावास्या दर्भो ग्राह्यो नवः स्मृतः' इति । हारीतोऽपि—'मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः' इत्याह ।

तदुक्तादिवैधकालोद्धृतानां दैवपितृकर्मणि नियतत्वम् । मानुषकर्मणि तु 'साग्रं देवानां, समूलं पितॄणाम्' इत्यादिवद् विधिस्पर्शाभावाद् विधेर्न नियतत्वं मन्तव्यम् । दर्भलक्षणादिकं यथा—

सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ।
अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाःस्मृताः ।
समूलाः कुतपाःप्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ।
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

इति संस्कारभास्करे ( ५ ) । दर्भविकल्पे ग्राह्यतृणान्युक्तानि संस्काररत्नमालायाम् ( १९ ) । तथा च स्मृत्यन्तरे—

कुशाभावे तु काशाः स्युः कुशाः काशाः समाः स्मृताः ।
काशाभावे ग्रहीतव्या अन्ये दर्भा यथोचितम् ॥

हारीतः—कुशाभावे तथा काशा दूर्वा व्रीहियवा अपि ।
गोधूमाश्चैव नीवाराः श्यामाकोशीरबल्वजाः ।
मुञ्जा वाथ परिग्राह्याः सर्वकर्मसु निश्चितम् ॥ इति ।

तेषामलाभे शूकादिवर्जं सर्वतृणानीति गोभिलः ( १।५।१९ )। यत् कुशाः काशा इत्यादिब्रह्मपुराणवचनं तत् कौथुमादिव्यतिरिक्तविषयं ज्ञेयमिति व्याख्याकृत् ( गो० ना० १८२ )। विवाहादिमङ्गलकर्माङ्गमधुपर्के तु दर्भस्थाने दूर्वा एव ग्राह्याः 'कुशास्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये' इति हेमाद्रौ ब्रह्माण्डपुराणवचनात्। विवाहादिमङ्गलकर्मणि क्रियमाणे दर्भस्थाने दूर्वा एवेति संस्काररत्नमालाकारः (४१)। दूर्वा अष्टदिनावध्यपर्युषिता। दर्भास्त्वग्राह्यानाह लघुहारीतः—

पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षट्कुशान् परिवर्जयेत्॥ इति। (वि०वि०११)

तथा च—दर्भाः पिण्डेषु निर्माल्या विप्राः प्रेतान्नभोजने।
मन्त्राः शूद्रेषु निर्माल्या निर्माल्याश्चितिपावकाः॥
पिण्डार्था ये स्तृता दर्भास्तर्पणं तु कृतं च यैः।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते॥
( कर्म० प्र० २।८५।४७ )

सङ्ग्रहाद् वत्सरं यावच्छुद्धिः स्यादिध्मबर्हिषाम्।
अतः परं न गृह्णीयाज्जपादौ यज्ञकर्मणि॥
( गो० ना० १९८ )

इति। एकवर्षपर्यन्तं कुशोपयोग इति नित्याचारपद्धतिः। दर्भाहरणादिकमाह शातातपः—समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः।
लक्षपुष्पार्चनादौ तु क्रयक्रीतमपीष्यते॥ इति मन्त्रकोशे।

तथा चाङ्गिराः—अहन्यहनि कर्मार्थं कुशच्छेदः प्रशस्यते।
कुशा धृता ये पूर्वत्र योग्याः स्युर्नोत्तरत्र ते॥ इति।

जाबालिरपि—कुशान् काशांश्च पुष्पाणि गवार्थञ्च तृणादिकम्।
निषिद्धे चापि गृह्णीयादमावास्याहनि द्विजः।
मासिमास्याहृता दर्भास्तत्तन्मास्येव चोदिताः॥ इति।

विष्णुस्तु— दर्शे श्रावणमासस्य समन्त्रोत्पाटिताः कुशाः।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः॥

इति। पूर्वत्र पूर्वकर्मणीत्यर्थः। ( सं० र० १६ )

**दाता उदङ्मुखाय पूज्याय दर्भान् ददाति ।**

अथ पूज्यायार्हणीयाय दर्भप्रदानम् । दर्भानिति आसनस्थानीयविष्टरदानहेतुकनिर्माणाय । अत्र पूज्ये उदङ्मुखताविधानात् पूजकस्य दातुः प्राङ्मुखत्वमवगन्तव्यम्, सामान्यनियमात् । तथा चोक्तम्—'दिशामनुक्तौ विज्ञेया ऐन्द्री सौम्यापराजिता' इति । अपराजिता ऐशानी तु दातुर्भवितुमर्हति । विवाहादावर्हणे उपवेशनप्रकार उक्तः कल्पतरुरत्नाकरयोर्गृह्यपरिशिष्टे—

कन्यां वरयमाणानामेष धर्मो विधीयते ।
प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः ॥

इति । वरयन्ति गोत्रप्रवराभिधानपूर्वकं ददति, प्रतिगृह्णन्तीति श्रवणात् । अतएव दानधर्मोत्तरे—सर्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः ।
एष दानविधिर्दृष्टो विवाहे तु विपर्ययः ॥

विपर्यय इति प्रत्यङ्मुखः सम्प्रदाता प्रतिग्रहीता च प्राङ्मुख इत्यभिप्रायेण । तथा च शङ्खः—प्रत्यङ्मुखाभिरूपाय वराय शुचिसन्निधौ ।
दद्यात् प्रत्यङ्मुखः कन्यां क्षणे लक्षणसंयुते ॥ इति भवदेवभट्टीय सम्बन्धविवेके । तर्कालङ्कारस्तूद्वाहचन्द्रालोके दानधर्मे विपर्ययस्थाने व्यतिक्रम इति पाठं मनुते । व्यतिक्रम इति ग्रहीता प्राङ्मुखो दाता चोदङ्मुख इत्यर्थः । शिष्टानामाचारश्चैवमेव स्मर्यते, यथा पार्वत्या विवाहे—
उपविष्टस्त्रिनेत्रस्तु प्राचीं दिशमुदैक्षत ।
सप्तर्षिसेवितामाशां शैलेन्द्रोऽप्यवलोकयत् ॥ इति ।

सप्तर्षिसेवितामाशामुत्तरां दिशम् । अवलोकयदित्यडभावश्छान्दसः । तथा प्रभावतीविवाहे—

जयन्तं प्राङ्मुखं कृत्वा विश्वकर्मा ह्युदङ्मुखः ।
कन्यां प्रत्यङ्मुखीं कृत्वा सालङ्कारां प्रभावतीम् ॥

इत्यादि । यच्च व्यतिक्रम इत्यत्र 'प्रत्यङ्मुखः सम्प्रदाता प्रतिग्रहीता प्राङ्मुखः' इत्याचार्यचूडामणिव्याख्यानं तत्त्वकृद्भिर्लिखितं, तच्चिन्त्यम् । व्यतिक्रमस्य क्रमविपर्ययरूपत्वेन दातृग्रहीत्रोरुपदिष्टधर्मपरिवृत्तिरूपतया पर्यवसानाद् व्यतिक्रमपदात् तथाऽनवगतेः । तथा चान्यत्र दातुर्यो धर्मः

अथ विष्टरान् कारयति—**विष्टरान् कुरु ।**

---

पूर्वदिङ्मुखत्वरूपः स विवाहे ग्रहीतुः । एवमन्यत्र ग्रहीतुर्यो धर्म उदङ्मुखत्वं स इह दातुरित्ययमेव तस्य वचनस्यार्थः । दातृप्रतिग्रहीत्रोरुपदिष्टधर्मवैपरीत्यस्य व्यतिक्रमरूपत्वे त्वभिप्रेयमाणे दातुः प्राङ्मुखत्ववैपरीत्येन प्रत्यङ्मुखत्ववद् ग्रहीतुरुदङ्मुखत्ववैपरीत्येन दक्षिणमुखत्वापत्तेः । न चेष्टापत्तिः, केनापि तथाऽनभ्युपगमाद् भवतामपसिद्धान्तापत्तेः, पूर्वोपदर्शितशिष्टाचारविरोधाच्च । 'कन्यां वरयमाणानाम्' इत्यादिकल्पतरु-रत्नाकर-विवाहतत्त्वार्णवो-द्वाहतत्त्वादिगृह्यपरिशिष्टविरोधापत्तेश्चापि । विवाहात् पूर्वं विवाहकर्तृपक्षाणां कन्यावरणं विहितम् । ये किल कन्यां वरयन्ति तेषामयं धर्मो यत् प्रत्यङ्मुखाः सन्तः कन्यां वरयन्ति, प्रतिग्रहीतारस्तु प्राङ्मुखाः सन्तः कन्यां प्रतिगृह्णन्ति । वरणे प्रतिग्रहाभावात् प्रतिग्रहीतुर्धर्मः प्राङ्मुखत्वं प्रसङ्गादत्रोक्तः । न तु वरणप्रतिग्रहयोः कोऽप्यभिसम्बन्धोऽस्ति । अभिसम्बन्धे वा कन्यावरणे प्राङ्मुख्याः कन्यायाः करे फलदानोपदेशात् तत्प्रतिग्रहपरतया स वर्णनीय इत्यलं विस्तरेण ।

देवभद्रेण दातुरेकत्वमुक्तम् । गोभिलगृह्यसूत्रे तूपतिष्ठेरन्निति बहुवचनेनैतद् दर्शयति यत् सर्वैरेव गृह्यैरर्हणीयापचित्यर्थमप्रमत्तैर्भाव्यमिति । तथा च वाजसनेयिनां श्रुतिः—यत्र वा अर्हन्नागच्छति, सर्वे गृह्या इव वै तत्र चेष्टन्ति तथाह्यपचितो भवतीति ।

अथ विष्टरनिर्मापणम् । दर्भाणां वामावर्तग्रन्थिकः कूर्चो विष्टरस्तान् त्रीन् कारयति । कातीयेषु विष्टरद्वयदानं मधुपर्के । आथर्वणिकेषु तु विष्टरत्रयं भवति । अत्र विष्टरप्रदाने 'विष्टरः प्रतिगृह्यताम्, विष्टरं प्रतिगृह्णामि' इत्येवमधिकं वाजसनेयानुसारिष्वाधुनिकेषु पुस्तकेषु दृश्यते । तद् विष्टरपदं हरिहरसंस्कारभास्करादिप्राचीनग्रन्थेषु कुत्राप्यदर्शनादधिकमेव यद्यपि, तथापि यदि तस्य ग्राह्यत्वं तदा तत्रेयं युक्तिः—अदत्तस्य दानायोगाद् विष्टरः प्रतिगृह्यतामित्यादेः शाखान्तरोक्तस्योपादानं कर्तव्यम्, दानाभिलापकवाक्यस्य युक्तत्वात् । एवमर्हणीयेनापि विष्टरं प्रतिगृह्णामीति वक्तव्यमुक्तयुक्तेः । 'विष्टरं तूष्णीं वर आदत्ते' इति हरिहरलेखनं वैदिकमन्त्राभावपरतयोन्नेयम् । अत्रार्थे कारिका च—

विष्टरं प्रतिगृह्णामीत्यभिधायाऽददेद् वरः ।
तमुत्तराग्रमाधाय मन्त्रेणोपविशेत् स्वयम् ॥ इति ।

विष्टरस्त्रिवृदरत्निमात्रः कौशो रज्जुविशेष इति भर्तृयज्ञः। रेणुस्तु 'प्रादेशमात्रं त्रिवृतं कौशं वा काशनिर्मितम्' इत्याह। पञ्चविंशतिदर्भतरुणमयं कूर्चमिति हरिहरः। तथा च परिशिष्टम्—'पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्धेन तु विष्टरः' इति। विष्टर उपवेशनार्थं विष्टरिका, पद्यञ्च विष्टरमिति कर्कोपाध्यायाः। विष्टरमुपवेशनार्थं पञ्चविंशच्छलाकारचितं कुशपुलकं, पद्यञ्च विष्टरमेवेति जयरामः। किञ्च—

पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता।
विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्तितम्॥ इति।

विष्टरास्त्रिवृतो दर्भकूर्चकाश्चेत्युदाजहार हरिहरः। रघुनन्दनस्तु विष्टरः सार्धद्वितयवामावर्तवलिताधोमुखाग्रा असंख्यातदर्भा इत्याह। तथा च गृह्यासङ्ग्रहः—

ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते।
ऊर्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः॥
कतिभिस्तु भवेद् ब्रह्मा कतिभिर्विष्टरः स्मृतः।
पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्धेन तु विष्टरः॥ इति।

ऊर्ध्वकेश ऊर्ध्वाग्रः लम्बकेशस्तिर्यगग्रः। कात्यायनेन तु कर्मप्रदीपे—

यज्ञवास्तुनि मुष्टचाञ्च स्तम्बे दर्भवटौ तथा।
दर्भसङ्ख्या न विहिता विष्टरास्तरणेष्वपि॥

इति विष्टरे दर्भसङ्ख्या निषिद्धा। तदनयोर्विकल्पः, पञ्चाशदर्धैर्वा कुशैः विष्टरः स्यादसङ्ख्यातैर्वेति, द्वयोरेवाचार्याभ्यामनुशिष्टत्वादनन्यगतेर्वचनात्। विष्टरादिसमर्पणप्रकारश्चैवम्–विष्टरादीन् मधुपर्कान्तान् द्रव्यविशेषानेकैकशस्त्रिस्त्रिरुच्चार्य प्रत्येकं द्रव्यं यथाकालं निवेदयेरन्। निवेदनञ्च दक्षिणहस्तेनादाय कर्तव्यम्, कर्तुरङ्गस्योपदेशाभावे तस्यैव करस्य कर्मपारगत्वात्। तथा चोक्तम्—

यत्रोपदिश्यते कर्म कर्तुरङ्गं न चोच्यते।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः॥ इति।

स खल्वेकशाखं प्रथमं पाद्यं, द्विशाखमासनम्, त्रिशाखं मधुपर्काय ।

तस्माद् विष्टरनिवेदने उत्तानहस्ताभ्यामित्यसङ्गता कल्पना भवदेवस्य । प्रत्यङ्मुखेन यजमानेन तिष्ठता दत्तमासनात् पश्चिमे प्राङ्मुखस्तिष्ठन्नर्घ्यः पूर्वोक्तलक्षणं विष्टरं तूष्णीं पाणिभ्यामुदगग्रमादत्ते इति हरिहरः । पाणिभ्यां विष्टरप्रतिग्रह इति हरिहरमतमतीव मन्दम्, प्रमाणाभावादिति गदाधरः । दाता च विष्टरकरणार्थं प्रैषं ददाति–विष्टरान् कुर्विति ।

सः यजमानपुरुषः कुर्यादिति शेषः । खल्विति स्वशाखीयधर्मविशेषद्योतनाय वचनम् । शाखा वेणी पूलकमिति यावत् । बहूनां कुशानामेकयूनत्वापादनेऽत्र शाखाशब्दः, अन्यप्रमाणसमन्वयात् । कातीयश्रौतसूत्रेऽपि ( १।३।२१ ) यूनशब्दव्यवहारो दृष्टः । यूनस्यैव लौकिकसंस्कृते साहित्यग्रन्थेषु वेणीशब्दव्यवहारः, बहूनां केशानां सङ्कुलनसादृश्यात् ।

कौशिके त्रयो विष्टरास्त्रिरूपाः, प्रतिरूपश्च कार्यभेदः । तत्रैकशाखो विष्टरः एकयूनः पादाधो निधानाय, द्विशाखो द्वियून आसनरूपस्त्रिशाखश्च त्रियूनो मधुपर्काय । त्रिषु विष्टरेषु प्रथमं पाद्यं विष्टरम् । पाद्यविष्टरस्य प्रदानमार्थिकम्, प्रकर्षतीति ( कौ० १२।१।९ ) क्रियायोगात् । प्रकर्षणं नाम विष्टरेण धूल्याद्यपनयनाय सजलं घर्षणम् । पादद्वित्वेऽपि विष्टरमेकमेव घर्षणाय । प्रथमं पाद्यमेकशाखमित्येकस्मिन् मूले यावन्ति दलानि तेषां सर्वेषां साहित्येन । एवं द्विशाखमिति मूलाश्रितसकलदलयुतं पिञ्जूलीद्वयम् । एवं त्रिशाखं पिञ्जूलीत्रययुतम् ।

याज्ञवल्क्यस्मृतौ ( १।२२९ ) विष्टरार्थं कुशानपीत्युक्तौ मिताक्षराकारः—विष्टरार्थं कुशांश्च युग्मान् द्विगुणितानासने दक्षिणतो दत्त्वेत्याह । अत्र द्विगुणितानिति द्वियूनताबोधकं, युग्मानिति च युग्मसंख्यकुशवाचकम् । ततश्च द्विशाखमासनमिति कौशिकसूत्रेणैकवाक्यता समवलोक्यते । वाजसनेयिनस्तु पद्यमिति पठन्ति । तथा च पद्यं पद्भ्यामाक्रमणीयमुक्तलक्षणं विष्टरमिति हरिहरः । पद्यं पादयोरधस्तान्निधानार्थं विष्टरमिति गदाधरः । भर्तृयज्ञमते तु पादप्रक्षालनार्थमुदकं पद्यशब्देन । तथैव च छन्दोगेषु रघुनन्दनः ।

अथ विष्टरनिर्माणप्रकारमुपदिशति—स यावत इति । स निर्माणकर्ता यावतो दर्भान् विहितान् मन्येत तावत उपादाय गृहीत्वा विवेच्य

स यावतो मन्येत तावत उपादाय, विवेच्य, सम्पर्याप्य मूलानि च प्रान्तानि च, यथा विस्तीर्ण इव स्यादित्युपोत्कृष्य, मध्यदेशेऽभिसन्नह्यति।

ऋतेन त्वा, सत्येन त्वा, तपसा त्वा कर्मणात्वेति सन्नह्यति। **ऋतेन त्रिः कौशिको लिङ्गोक्ता जगत्यः।**

**ॐ ऋतेन त्वा कर्मणा त्वा सन्नह्यामि—प्रथमः।**
**ॐ सत्येन त्वा कर्मणा त्वा सन्नह्यामि—द्वितीयः।**
**ॐ तपसा त्वा कर्मणा त्वा सन्नह्यामि—तृतीयः।**

---

धूल्याद्यपनयनेन संस्कृत्य, सम्पर्याप्य प्रथयित्वा, यथोक्तमुपोत्कृष्य सज्जयित्वा, अभिसन्नह्यति अपेक्षितेष्वनेकस्थानेषु नियमानुकूलं बध्नातीति भावः।

सन्नहने मन्त्राः ऋतेनेत्यादयः। त्रिरिति मन्त्रत्रयवाची, कर्मणा त्वेति चतुर्थो मन्त्रो मा भूदित्यर्थकश्च। 'सन्नह्यामि' इति साकांक्षत्वादनुषङ्गः ( द्र. का. श्रौ. १।३।३ )। कर्मणा त्वेति मन्त्रत्रयेऽनुषज्यते। कुशमयो विष्टरोऽथर्ववेदीयमधुपर्क एव मन्त्रेण सन्नह्यत इति विशेषः। सन्नहनं नाम अरत्निमात्राणां पञ्चविंशतिदर्भाणां यथाभिलाषमुपात्तानां वा दर्भाणां त्रिवृत्त्वेन वामावर्ततया रज्जुत्वापादनानुकूला क्रिया। तच्च त्रिवारं मन्त्रेण, शेषं यथार्हं तूष्णीम्। तत्र प्रथमसन्नहने मन्त्रः **ऋतेनेति**, अस्यार्थः—हे विष्टर, त्वा त्वाम् **ऋतेन** मानसिकेन सद्विचारात्मकेन सत्येन हेतुना, कर्मणा मधुपर्कप्रयोजकेनार्त्विज्य-वरत्वादिकर्मणा च हेतुना, सन्नह्यामि सम्बध्नामि। त्वेति वीप्सा समादरार्था, हेतौ च तृतीया। प्रथम इति प्रथमो मन्त्रः। एवमग्रेऽपि सङ्ख्यायोगो मन्त्रसमानाधिकरणः, न क्रियाविशेषणम्।

द्वितीयमन्त्रार्थस्तु—हे विष्टर, व्यावहारिकेण सत्येन वाचिकेन यथार्थभाषणेन, कर्मणा च हेतुना सन्नह्यामीति पूर्ववत्। 'सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम्' इति स्मृतौ ( म. ४।१३८ ) प्रियसत्योक्तिविधानाद् व्यावहारिकेण वाचिकेन सत्येनेत्युक्तम्।

अथ तृतीयमन्त्रार्थः—हे विष्टर, त्वा त्वां तपसा द्वन्द्वसहिष्णुतारूपेण तपसा हेतुना कर्मणा च प्रवृत्तेन सन्नह्यामीति पूर्ववत्। द्वन्द्वसहिष्णुतात्मकं तपो मुख्यम्। श्रीमद्भगवद्गीतोक्तं ( १७।१४-१६ ) कायिक-वाचिक-मानसिकभेदेन त्रिविधं तपो मुख्यतपस एव साधनभूतं गौणम्। तदेतस्य सात्त्विक-राजस-तामसत्वं तु मानवप्रवृत्तिमुपजीव्य बोधितमिति ( गी० १७।१७-१९ ) बोध्यम्।

अथ ह सृजत्यतिसृष्टो द्वेष्टा योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। **अस्य च** दातुरिति दातारमीक्षते। **अतिसृष्टः कौशिको लिङ्गोक्ता बृहती।**

**ॐ अतिसृष्टो द्वेष्टा योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽस्य च दातुः।**

अथोदकमाहारयति पाद्यं भो ३ इति। **पाद्यं कौशिको लिङ्गोक्ताऽनुष्टुप्।**

**ॐ पाद्यं भोः ३ प्रतिगृह्यताम्। प्रतिगृह्णामि।**

**तूष्णीं पाद्यमवेक्ष्य,** हिरण्यवर्णाभिः प्रतिमन्त्र्य।

**हिरण्यवर्णाश्चतस्रः शन्तातिरापस्त्रिष्टुभः।**

---

अथ विष्टरं सृजति, कार्यानुगुण्येनोपवेशनाय यथादेशं पूज्यः स्थापयति। तथा च मन्त्रार्थः—यो जीवः मानवो वा अस्मान् मधुपर्कणाम् पूज्यं पूजयितॄन् प्रति, द्वेष्टि द्वेषबुद्ध्या हानिमभिलषति, यञ्च जीवं वयं पूजयितारो द्विष्मः अपकारं तस्याभिलषामः, स उभयविधो द्वेष्टा अपकारकः अतिसृष्टः। सृज विसर्गे, अत्यन्तमस्माल्लोकादपसारितः, कार्यानुगुणतया बहिष्कृतः अक्षमतामापादित इति भावः।

अस्य च दातुरितिमन्त्रेण पूज्यः पूजकं पश्येत्। तथा चार्थः—अस्य विष्टरस्य दातुर्मह्यं प्रतिपादयितुरपि द्वेष्टा अपकारकः अतिसृष्टः अत्यन्तमस्माल्लोकादपसारित इति पूर्वमन्त्रादर्थपूर्तिः। अस्य इत्यत्र स्थाने यजमाननामग्रहणमुचितमिति केचित्, कातीयादिकल्पसादृश्यात्।

अथ पाद्यं पादशोधनार्थं जलमुपाहरति पूज्याय। सूत्रोक्तमुदकपदं केवलोदकाभिप्रायेण विशिष्टार्थकम्। मानुषं पाद्यं केवलं जलमेवेति पुराणेषु स्मर्यते। तथा च पाद्योपाहरणपात्रमपि निर्दिष्टं तत्रैव—

पादार्थमुदकं पाद्यं केवलं जलमेव तत्।
तत् तैजसेन पात्रेण शङ्खेनापि निवेदयेत्॥ इति।

पादप्रक्षालनं कांस्ये न कर्तव्यमित्याह विष्णुधर्मोत्तरम्—'दर्भैर्न मार्जयेत् पादौ न च कांस्ये प्रधावयेत्' इति। अत्र दर्भपदं सामान्यकुशपरं, न विष्टरादिकुशविशेषपरं मन्तव्यम्। तथा च मन्त्रार्थः—भोः इति पूज्यस्य सादरं सावहितत्वाय सम्बोधनम्। हे पूज्य, इदमस्मत्प्रदत्तं पाद्यं पादावनेजनीयं जलं प्रतिगृह्यताम्, हस्तेन स्वीक्रियतामिति। पूज्यश्च प्रतिगृह्णामीति कथयन् स्वीकरोति। ततश्च जलं निरीक्ष्य हिरण्यवर्णाभिर्ऋग्भिस्तत्प्रतिमन्त्र्य पदार्थोद्देश्येन मन्त्राक्षरपाठं कृत्वा यथोक्तं प्रकर्षतीति शेषः।

**ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः।**
**या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥ १ ॥**

**यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्।**
**या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥ २ ॥**

---

हिरण्यवर्णाश्चतस्र ऋचः शन्तातिदृष्टाः अब्दैवत्यास्त्रिष्टुप्छन्दस्काः शौनकसंहितायां प्रथमकाण्डस्य त्रयस्त्रिंशत्तमसूक्तत्वेनावस्थिताः। मधुपर्के पाद्योदकाभिमन्त्रणे चैतत् सूक्तमिति तत्र सायणार्यो विनिर्दिशति। तथा चार्थः प्रथमायाः—

हिरण्यवर्णाः हितरमणीयवर्णाः हिरण्यसदृशवर्णा वा, हिरण्यस्य वर्ण इव वर्णो यासां तास्तथोक्ताः, शुचयः शुद्धाः, अतएव पावकाः अन्येषां स्नानपानादिना शोधयित्र्यः। अपां स्वरूपपर्यालोचनया शुद्धिहेतुतामभिधाय शोधकानां सवित्रादीनां जन्महेतुत्वेनापि ताः समर्थयते यासु इति। यास्वप्सु सविता सर्वस्य प्राणिजातस्य प्रेरक आदित्यो जातः प्रादुर्भूतः। प्रत्यहं हि समुद्रात् सूर्य उद्यन् दृश्यते, तदपेक्षोऽयं निर्देशः। तथा यास्वप्सु मेघस्थासु सामुद्रीषु चाग्निः वैद्युतवाडवरूपेण जात इति सम्बन्धः। गर्भरूपेण शुचिना अग्निना नित्यसम्बन्धादप्यपां पूततामाह या अग्निमिति। याः सुवर्णाः शोभनवर्णा आपः अग्निम् अङ्गनादिगुणयुक्तं देवं गर्भं दधिरे गर्भत्वेन धारयन्ति। तथा च निगमः—अग्ने गर्भो अपामसि ( तै० ४।२।३।३ ) इति। ताः उदीरितलक्षणाः सर्वा आपः नः अस्माकम् अवसेकादिना कर्मणा शम् रोगादिशमनहेतवः, स्योनाः सुखकारिण्यश्च भवन्तु।

द्वितीयस्याः ऋचोऽर्थः—यासां राजेत्याप एव स्तूयन्ते। राजा राजमानो वरुण एतत्संज्ञः पापिनां निग्रहकर्ता देवो यासामपां मध्ये मध्यभागे समुद्र इति यावत्। तत्र स्थित्वा जनानां सत्यानृतौ, सत्यं यथार्थभाषणं तद्विपरीतमनृतमित्युभे अवपश्यन् तत्कर्तुर्निग्रहार्थमवयुत्य परस्परसाङ्कर्यपरिहारेण जानन् याति गच्छति पाशहस्तस्तत्र तत्र सन्निधत्ते। तथा च तैत्तिरीयकम्—अनृते खलु वै क्रियमाणे वरुणो गृह्णाति ( तै. ब्रा. १।७।२।६ ) इति। अन्यद् व्याख्यातम्।

**यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।**
**या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥ ३ ॥**
**शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे ।**
**घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ॥ ४ ॥**

दक्षिणं पादं प्रथमं प्रकर्षति—मयि ब्रह्म च तपश्च धारयाणीति ।

---

तृतीयस्यास्तु—देवा इन्द्राद्याः यासामपां सारभूतममृतं सोमं वा दिवि द्युलोके भक्षम् उपभोग्यं कृण्वन्ति कुर्वन्ति । तथा या आपः अन्तरिक्षे अन्तरिक्षलोके बहुधा बहुप्रकारेण वृष्टयादिरूपेण नाना भवन्ति । शिष्टं व्याख्यातम् ।

चतुर्थ्याश्चार्थः—हे आपः अबभिमानिन्यो देवताः, यूयं शिवेन अक्रूरेण सुखकरेण चक्षुषा लोचनेन मा मां सेकादिना अनिष्टपरिहारेष्टप्राप्तिकामं पश्यत अवलोकयत । तथा शिवया कल्याण्या इष्टप्राप्तिहेतुभूतया तन्वा युष्मदीयेन शरीरेण मे मम युष्मदनुग्रहकांक्षिणः त्वचं त्वग्धातुम् उपस्पृशत सम्मृशत । परोक्षवदाह—घृतश्चुतः, घृतं क्षरणशीलं दीप्यमानं वा अमृतं श्चोतन्ति क्षरन्तीति घृतश्चुतः अमृतस्राविण्य आपः । श्च्युतिर् क्षरणे । शिष्टं व्याख्यातम् । एतासामृचां विनियोगे सातवलेकरेण चन्द्रमा अपि देवत्वेन निर्दिष्टः, स चार्थपरिशीलने न युक्तिसहः प्रतिभाति ।

अथार्घ्यस्य दक्षिणचरणप्रकर्षणं, धूल्याद्यपनाय सजलं घर्षणम् । सार्ववर्णिकानामर्घ्याणां दक्षिणपादस्यैव प्रथमं प्रक्षालनमाथर्वणिकानां विशिष्यते । सामगानां तु सव्यस्यैव । तथा च तर्कालङ्कारः—प्रक्षालयेदिति क्रियाभ्यासो निर्देशक्रमेण पादयोः प्रक्षालनार्थः, अन्यथा उदक्संस्थानुरोधाद् दक्षिणं प्रक्षाल्य ततः सव्यस्य प्रक्षालनं स्यात्, तच्चानिष्टम् । पठन्ति च—

> पादं प्रक्षालयेद् विप्रो दक्षिणं प्रथमं सदा ।
> शुद्रस्तु वामं प्रथमं सामवेदी तथा वधूः ॥ इति ।
> सामगः क्षालयेत् सव्यमादावन्यस्तु दक्षिणम् ॥

इति चैवमादि । पादप्रक्षालनं विशेषयति देवलः—

> प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः ।
> उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥ इति ।

दैवपैतृकेतरत्रापस्तम्बः—'प्रत्यक् पादावसेचनम्' इत्याह । क्रममाह गोभिलः, सव्यं पादमित्यादिना, अर्हणीये तथा दर्शनात् सर्वत्र तथा कल्प्यते । पारस्करोऽपि ब्राह्मणव्यतिरिक्तानां कृते सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीत्याह ।

**मयि द्वे कौशिको लिङ्गोक्ते जगत्यौ। ॐ मयि ब्रह्म च तपश्च धारयाणि।** दक्षिणे प्रक्षालिते सव्यं प्रकर्षति, मयि क्षत्रं च विशश्च धारयाणीति। **ॐ मयि क्षत्रं च विशश्च धारयाणि।** प्रक्षालितावनुमन्त्रयते। **इमौ कौशिको लिङ्गोक्ता बृहती।**

---

पादप्रक्षालने रघुनन्दनः—'सव्यं प्रथमं प्रक्षालयतीति सूत्रेण प्राक् सव्यपाद-प्रक्षालने सिद्धे सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीत्यत्र सव्यग्रहणं सामा-न्यार्थम्, तेनान्यस्मिन्नपि पादप्रक्षालने सव्यस्यैव प्राथम्यम्, 'अन्यार्थं पूर्व-वचनम्' इति दर्शनात्। ब्राह्मणश्चेद् दक्षिणं प्रथममिति सूत्रम्। तस्य पादौ ब्राह्मणः प्रक्षालयति तदा दक्षिणं दातव्यं प्रथमम् इति मन्तव्यम्, न सव्यम्। यथा प्रक्षालयतीत्यनुवृत्तावाश्वलायनः—दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्, सव्यं शूद्रायेति। स्वयं प्रक्षालने सव्यस्यैव प्राथम्यमिति हरिशर्मा। एवञ्च दक्षिणपादप्रक्षालनानन्तरं वामपादप्रक्षालनं वाचस्पतिमिश्राद्युक्तं हेयमिति' एवमाह। तदेतन्न विचारसहम्। कर्कोपाध्याय–जयराम–हरिहर–गदाधरैः सर्वैरपि ब्राह्मणस्यार्हणीयस्य दक्षिणपादप्रक्षालनं प्रथममित्यैककण्ठ्येनोक्त-त्वात्। कौशिके तु वर्णविशेषोद्देशाभावेन सर्वेषामेवार्हणीयानां दक्षिणपाद-प्रक्षालनं प्रथममिति ज्ञाप्यते।

पादप्रक्षालने मयि ब्रह्मेत्यादि मन्त्रद्वयं गृह्योक्तम्। द्वे इति वक्ष्य-माणसूत्रोक्तमन्त्राभिप्रायेण प्रयोगकृता समुल्लिखितम्। द्वे इति स्त्रीलिङ्ग-मृचौ इति विशेष्यं बोधयति। प्रथममन्त्रेण दक्षिणं पादं प्रक्षालयेत्। तथा चार्थः—पाद्योदकेन पादप्रक्षालने कृते जलस्य योऽंशो ममान्तः प्रविष्टो भवति तेन मयि पूज्ये, ब्रह्म ब्राह्मणजातिवीर्यं, तपः द्वन्द्वसहिष्णुतां तितिक्षात्मकं तत्त्वं च धारयाणि। डुधाञ् धारणपोषणयोः, पोषयामि। तदेतदुभयतत्त्वं मयि पुष्टं भवत्विति भावः।

दक्षिणे पादे प्रक्षालिते जलेन शोधिते वामं शोधयति मयि क्षत्रमिति मन्त्रेण। तथा चार्थः—पाद्यजलस्य शरीरान्तःप्रविष्टेनांशेन मयि पूज्ये आत्मनि, क्षत्रं क्षत्रियजातेर्विशेषगुणरूपं परस्य क्षतित्राणकरं तत्त्वं, विशः वैश्यवर्णगतविशेषगुणात्मकं स्वकार्यसाधनानुकूलं विनयतत्त्वं च धारयाणि मानवत्वेन बीजात्मना समवस्थितं पोषयामीति।

पादद्वये जलेन शोधिते सति गृह्योक्तेन इमाविति मन्त्रेण तावनु-मन्त्रयेत्। अनुपूर्वो मन्त्रयतिर्मन्त्रोच्चारणे। तथा चोक्तम्—

**ॐ इमौ पादाववनिक्तौ ब्राह्मणं यशसावताम् ।**
**आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे ॥**

अस्य च दातुः—इति दातारमीक्षते । अथासनमाहारयति—सविष्टरमासनं भो३ इति । **सविष्टरं कौशिको लिङ्गोक्ता गायत्री ।**

**ॐ सविष्टरमासनं भोः३ प्रतिगृह्यताम् । प्रतिगृह्णामि ।** तस्मिन् प्रत्यङ्मुख उपविशति —विमृग्वरीं पृथिवीमित्येतया ।

---

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ।
एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम् ॥ इति ।

पाद्यजलेन प्रक्षालितौ पादौ स्वयमेवानुमन्त्रयते पूज्यः इमाविति । अवनिक्तौ पाद्यजलेन स्वच्छतां शुचितां चापादितौ इमौ एतौ मम पादौ चरणौ गुल्फाधस्तनशरीरावयवौ मां ब्राह्मणं यशसा यशःप्रदानहेतुना अवतां रक्षताम् । सर्वदाहं ब्रह्मवर्चसेन वैदुष्येण च बहुत्र मधुपर्कार्हणलाभेन यशस्वी भूयासमित्यर्थः । मम पादाविमौ पापकार्ये चलित्वा मम यशो मा विनाशयताम् । मम चेमाः पादसंशोधननिर्माल्यभूताः पादावनेजनीः आपः मे मम द्विषन्तं शत्रुं निर्दहन्तु तस्य क्षोभात्मकं दाहं सम्पादयन्तु । मम अर्हणप्राप्त्या तस्य स्वभावत एव दुष्टाभिप्रायत्वेन क्षोभकारित्वात् ।

अस्येतिमन्त्रेण पाद्यदातारं पूजकं पाद्यप्रतिग्रहीता वीक्षते । यथा पूर्वमन्त्रेणात्मनो द्वेष्टारमहं निदग्धवानस्मि तथैवाहं कामये यदस्य मम दातुः पाद्यसमर्पयितुरर्चकस्य यजमानस्यापि द्विषन्तमिमा मम पादावनेजनीरापः निर्दहन्तु इत्याशीः । पूर्वमन्त्रक्रियासम्बन्धेऽपि मन्त्रपार्थक्यं सूत्रान्तरादवसीयते, क्रियापार्थक्याच्च । मन्त्रे चकारोक्तेरुभयोर्मन्त्रयोरविरतः पाठः । पाठसातत्याच्च न पूर्वमन्त्रीयापेक्षितपदानुषङ्गः । ततश्चेक्षणे 'अस्य च दातुः' इत्येतावानेव मन्त्रः । एवमन्यत्रापि द्रष्टव्यम् ।

ततोऽर्हणीयायासनसमर्पणं सविष्टरमितिना गृह्योक्तमन्त्रेण । अत्र सविष्टरपदस्य विष्टरात्मकमित्यर्थो मन्तव्यस्तथैवार्थसङ्गतेः । **अर्घ्यश्च** प्रतिगृह्णामीति स्वीकुर्यात् । ततस्तस्मिन्नासने पश्चिमाभिमुखः सन्नुपविशति प्रतिग्रहीता । उपवेशने च संहितोक्तमन्त्रस्योच्चारणं विमृग्वरीमित्येतस्य ( अ० सं० १२।१।२९ ) । मन्त्रस्यास्याथर्वा ऋषिस्त्रिष्टुप्छन्दः पृथिवी च

**विमृग्वरीमथर्वा भूमिस्त्रिष्टुप्।**

**ॐ विमृग्वरीं पृथिवीमा वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम्।**

**ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाभि नि षीदेम भूमे॥**

विष्टरे पादौ प्रतिष्ठाप्य। **अधिष्ठितः कौशिको लिङ्गोक्ता पङ्क्तिः।** ॐ अधिष्ठितो द्वेष्टा योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। अस्य च दातुः, —इति दातारमीक्षते। अथोदकमाहारयत्यर्घं भो३ इति। **३.दर्घं कौशिको लिङ्गोक्तानुष्टुप्।**

---

देवता। तथा चार्थः —

विमृग्वरीं गवेषणेन प्राप्यां पृथिवीं भूभागरूपाम् आवदामि तां प्रति कथयामि। किमिति चतुर्थे पादे उच्यते—हे भूमे पृथिवि, त्वा त्वामभि निषीदेम परितो वयं त्वदीयफलभोक्तृत्वेनावतिष्ठेम राजानमिव। कीदृशी भूमिर्विमृग्वरीत्युच्यते, क्षमां सर्वस्याप्युप्तस्य बीजस्य सहनशीलां सर्वविधान्नफलमूलजननीमिति भावः। भूमिं भूमगुणवतीमतिशयफलदात्रीं ब्रह्मणा वेदेन यज्ञेन च वावृधानां, यस्यां वेदाध्ययने यज्ञादिविध्यनुष्ठाने शास्त्रत आदेशो मनसश्च प्रवृत्तिः समुदियात् ताम्। तथा ऊर्जम्, ऊर्जबलप्राणनयोः। बलप्राणदान्नरस–( Vitamin )–युक्तं पुष्टं दृढं घृतं स्नेहसमन्वितञ्चान्नभागं खाद्यवस्तुनः सेव्यमंशं बिभ्रतीमिति विमृग्वरीविशेषणानि। क्षमादिगुणयुता हि पृथ्वी सर्वैरपि विमृग्यत इति विमृग्वरीत्युच्यते।

उपविश्य विष्टरे पादौ प्रतिष्ठाप्य स्थापयित्वा, स्थापितौ हस्तादिबलेन दृढीकृत्येतिभावः। अधिष्ठित इति गृह्योक्तं मन्त्रं जपति। द्वेष्टा मया अधिष्ठितः अधिकृतोऽधिगृहीतः। अधिनिगृह्याधः स्थापित इति भावः। शिष्टः सरलार्थो व्याख्यातश्च पुरस्तात्। यजमानावेक्षणादिकं पूर्ववत्। ततः पूज्यायार्घ्योपाहरणमर्घ्यमित्यादिना। मन्त्रः स्पष्टार्थः। अर्घ्यस्याष्टाङ्गत्वमुक्तं यथा—

दध्यक्षतसुमनसो घृतं सिद्धार्थका यवाः।
पानीयञ्चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते॥ इति।

**ॐ अर्घ्यं भो३ः प्रतिगृह्यताम्। प्रतिगृह्णामि। तूष्णीमर्घ्यंवेक्ष्य,** तत्प्रतिमन्त्रयते। **अन्नानां कौशिको लिङ्गोक्तातिशक्वरी।**

ॐ अन्नानां मुखमसि मुखमहं श्रेष्ठः समानानां भूयासम्।
आपोऽमृतं स्थामृतं मा कृणुत दासा अस्माकं[1] बहवो भवन्तु।
अश्वावद् गोमन्मय्यस्तु पुष्टौ[2] भूर्भुवः स्वर्जनदोम्॥ इति।

---

एष अष्टावयवयुतोऽर्घः देवार्चनादिषु प्रयोक्तव्यो न मानुषार्चन इति प्रतीयते। गृह्यासङ्ग्रहे—

दध्यक्षतसुमनस आपश्चेति चतुष्टयम्।
अर्घ्य एष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः॥

इत्यत्र गृह्योक्तार्घार्हार्हणे चतुरङ्गार्घ्यस्योपदेशात्। गृह्ये च मानुषा एवार्घ्याः। स खल्वयमर्घ्यः कांस्यपात्रेणार्हणीयस्याञ्जलौ निनेतव्यः। तथा च वचनम्—'कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ' इति। पूज्यः प्रतिगृह्णामीति मन्त्रेण गृह्णीयादिति प्रयोगकृतोऽभिप्रायः। ततस्तूष्णीमर्घ्येऽवलोक्य तं प्रति अन्नानामित्यादिगृह्योक्तं मन्त्रं पठेत् पूज्यः। तथा च मन्त्रार्थः—

हे अर्घ्यात्मक जल, यथा त्वमन्नानां धान्यादीनामदनीयानामुत्पादनानां मुखमुपायस्वरूपमसि तथैवाहमपि त्वदुपयोगेन श्रेष्ठः अभ्यर्हितः सन् समानानां समानजातीयानां सधर्मिणां वोन्नत्यै मुखमुपायस्वरूपो भूयासम्। मुखशब्दस्यात्रोपायार्थे प्रयोगो मन्तव्यः। श्रेष्ठार्थस्तु न सङ्गच्छते मन्त्रवर्णे श्रेष्ठपदस्य पृथक्प्रयोगात्, जलस्यान्नासमानजातीयत्वेन चान्नेषु श्रैष्ठ्याभावात्। उपायार्थे मुखपदप्रयोगो हैमकोशे यथा—

मुखमुपाये प्रारम्भे श्रेष्ठे निस्सरणास्ययोः। इति।

तथा च हे आपः, यूयममृतं स्थ अमृततत्त्वयुक्ताः यथा स्थ तथैव मा माममृतममरणधर्माणं कृणुत कुरुत। अत्रामृतत्वं यशःकायेन दीर्घजीवनं मन्तव्यम्, मर्त्यलोके समेषां जीवानां मरणस्यावश्यम्भावित्वात्। अत एव पूर्वस्मिन् काले सुप्रथितानां जनानां नाम्नामप्यमरत्वमाह शौनको बृहद्देवतायाम्—(१।३३)

अपि कुत्सितनामायमिह जीवेत् कथं चिरम्।
इति क्रियन्ते नामानि भूतानां विदितान्यपि॥ इति।

तथा च श्रैष्ठ्यादस्माकं दासाः सेवका बहवो भूयिष्ठा भवन्तु। त्वत्प्रसादन्मयि पुष्टौ स्वस्वीयाभिवृद्धौ अश्वावदश्वाद्येकशफयुक्ता गोमद्-

---

१. दासास्माकम् इति कौ० सू०    २. पुष्टम् इति कौ० सू०

तूष्णीमभ्यात्मं[1] निनयति, तेजोऽस्यमृतमसीति ललाटमालभते।

**तेजोऽसि कौशिको लिङ्गोक्ता जगती। ॐ तेजोऽस्यमृतमसि।** अथोदकमाहारयत्याचमनीयं भो३ इति। **आचमनीयं कौशिको लिङ्गोक्ता त्रिष्टुप्। ॐ आचमनीयं भो३: प्रतिगृह्यताम्। प्रतिगृह्णामि।** जीवाभिराचम्य। **जीवास्थ चतस्रो ब्रह्माऽपो द्वे अनुष्टुभौ गायत्र्युष्णिक्।**

**ॐ जीवा स्थ जीव्यासं सर्वमायुर्जीव्यासम्॥ १॥**
**उपजीवा स्थोप जीव्यासं सर्वमायुर्जीव्यासम्॥ २॥**

---

गवादिद्विशफपशुयुक्ता च समृद्धिरस्तु। भूर्भुवरित्याद्याः व्याहृतयः। प्रतिमन्त्रणानन्तरमर्घ्यपात्रं तूष्णीमभ्यात्मम् आत्मनोऽभिमुखं पदार्थस्थितिं कृत्वा निनयति शनैःशनैर्यावन्मन्त्रं धारापातनं निनयनम्, तत्करोति। ततस्तेजोऽसीति गृह्योक्तमन्त्रेणार्घ्यजलं ललाटेन स्पृशेत्। आलभते पदार्थैकदेशस्य कृत्स्नस्य वा स्वावयवेन स्पर्शं करोतीत्यर्थः। मन्त्रार्थस्तु—

अर्घ्योदक, त्वं तेजोऽसि तेजःप्रदमसि। अत्रायुर्घृतमित्यादिवत्तेजःप्रदत्वे लक्षणा। तथा चामृतमसि अमृततत्त्वयुक्तमसि। तत्तेजोऽमृतत्वञ्चास्मासु धेहीति शेषः।

तत आचमनीयमुदकमर्हणीयायोपाहरति मन्त्रेण। स च प्रतिगृह्णामीति स्वीकरोति। गृहीतस्याचमनीयजलस्य जीवलिङ्गाभिः संहितोक्ताभिः (अ० सं० १९।६९।१-४) चतसृभिर्ऋग्भिराचमनम्। ऋक्चतुष्टयत्वाच्च चतुष्कृत्व इति ज्ञायते। आचमनं नाम हस्तगृहीतस्य पात्रगृहीतस्य वा ब्राह्मणादिवर्णक्रमेण हृदय-कण्ठ-तात्वार्द्रीकरणक्षमस्य जलस्य ब्राह्मतीर्थेन मुखे प्रक्षेपपूर्वकमन्तर्गमनम्। आचम्य तत्कृत्वेत्यर्थः। मन्त्रार्थस्तूपरिष्टाद् (अ० सं० १९।७०।१) वक्ष्यमाणमन्त्रे संस्तुतानिन्द्रसूर्यदेवान् सम्बोध्यैवं बोध्यः—

हे इन्द्रादयो यूयं जीवाः जीवनवन्तः आयुष्मन्तः स्थ भवथ। भवदनुग्रहादहमपि जीव्यासम् जीवनवानायुष्मान् भूयासम्, अनेनाचमनकर्मणेति विनियोगादवगम्यते। कतिपयकालावस्थानमपि जीवनं भवेदिति तत्राह— सर्वं सम्पूर्णं शतसंवत्सरपरिमितम् आयुर्जीव्यासम् प्राणान् धारयेयम्। एवमुत्तरे मन्त्रा व्याख्येयाः। १। उपजीव्याः, उपशब्दोऽधिकार्थकः, अधिकं जीवनवन्तः। अथवा उपजीवयन्ति सन्निहितान् भक्तानायुष्मतः कुर्वन्तीति

---

1. मध्यात्मम् इति कौ० सू०

**संजीवा स्थ सं जीव्यासं सर्वमायुर्जीव्यासम् ॥ ३ ॥**
**जीवला स्थ जीव्यासं सर्वमायुर्जीव्यासम् ॥ ४ ॥**

**त्रिस्तूष्णीमात्मानमभ्युक्ष्य, अनुमन्त्रयत आत्मानमिन्द्र जीवेति । इन्द्रजीव ब्रह्मा सूर्यो गायत्री ।**

**ॐ इन्द्र जीव सूर्य जीव देवा जीवा जीव्यासमहम् ।**
**सर्वमायुर्जीव्यासम् ॥**

अथास्मै मधुपर्कं वेदयन्ते । दधि च मधु च ब्राह्मो मधुपर्कः । द्व्यनुचरो मधुपर्को भो३ इति । द्वाभ्यां शाखाभ्यामधस्तादेकयोपरिष्टात्

---

वोपजीव्याः । २ । संजीव्याः समीचीनजीवनवन्तः । जीवनकाले एकः क्षणोऽपि वैयर्थ्येन न नीयते, किन्तु परोपकारित्वेनेत्यायुषः सम्यक्त्वम् । ३ । जीवलाः जीवः प्राणधारणमत्र मत्वर्थीयो लच्प्रत्ययः । मन्त्रार्थः सुगमः । ४ ।

एवञ्चतुष्कृत्व आचम्य शुद्धोकेनात्मानं त्रिरभ्युक्षेत् तूष्णीमेव । तत इन्द्र जीवेत यृचात्मानमनुमन्त्रयेत् । तथा च मन्त्रार्थः —

हे इन्द्र, परमैश्वर्यसम्पन्न सर्वेन्द्रियप्रकाशक, त्वं जीव आयुष्मान् भव । हे सूर्य, सर्वस्य प्रसवितस्त्वं जीव । हे देवाः इन्द्रसूर्यव्यतिरिक्ता अग्न्यादयः, यूयं जीवाः, भवतेति अनुषक्तक्रियापदस्य बहुवचनान्तत्वेन परिणमनम् । युष्मत्प्रसादादहमाचमनकर्मकर्ता जीव्यासम्, चिरकालपर्यन्तं प्राणान् धारयेयमित्यायुराशास्यते ।

अथ पूज्याय मधुपर्कप्रदानम् । मधुपर्क इत्यत्र कौशिकसूत्रेषु (१२।३।१-१०) परिभाषितमिश्रपदार्थस्य संज्ञा । तस्य च नवविधत्वेऽपि कार्ये एकदा एकस्यैवोपादानम् । पूज्यविशेषे फलविशेषे वा द्रव्यभेदान्मधुपर्कसंज्ञाभेदः, स चास्माभिरन्यत्र विशदं विवेचितस्तत एवावगन्तव्यः । प्रयोगकृता देवभद्रेण तु स्वोपयोगित्वादभ्यर्हितत्वाच्च ब्राह्मो मधुपर्क एव दधिमधुद्रव्यात्मकः समुल्लिखितः । उपलक्षणत्वेन स मन्तव्य इति वयं विमृशामः ।

मधुपर्कप्रदानं स्वव्यतिरिक्तव्यक्तिद्वयानुगतेन यजमानेन कर्तव्यमिति वयं मन्यामहे, वेदयन्त इति प्रतिपदं कर्तृबहुवचनोपदेशात्, द्व्यनुचर इति मधुपर्कस्य विशेषणाच्च । याज्ञिकपीयूषपादास्त्वन्यदभिप्रयन्ति । तथैव च

सापिधानम् । द्व्यनुचरः कौशिको लिङ्गोक्ता जगती ।

**ॐ द्व्यनुचरो मधुपर्को भो३ः प्रतिगृह्यताम् ।**

मधु वाता ऋतायत इत्येताभिरेवाभिमन्त्रणम् । **मधुवातास्तिस्रः कौशिको मधुगायत्र्यः ।**

ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्गावो भवन्तु नः ॥ १ ॥ **प्रथमम् ।**

---

**मन्त्रार्थः—**

भो इति प्लुतस्वरान्तं पूज्यस्य सावहितत्वाय सम्बोधनम् । अयं प्रदीयमानो मधुपर्कः शास्त्रविहितद्रव्यसमुच्चयात्मकः पात्रधृतः पदार्थः द्व्यनुचरः, भवतेऽर्हणाय प्रदीयत इति शेषः । द्वाभ्यां पात्र-कुशपदार्थाभ्याम-नुचरति समन्वेतीति द्व्यनुचरः । मधुपर्कद्रव्यं हि स्वस्थित्यै पात्रमर्थाद-पेक्षते । तत्र प्रदाने त्रिशाखं मधुपर्कायेति ( कौ० १२।१।३ ) कुशपदार्थ-सम्बन्धोऽप्युक्तः । मधुपर्कद्रव्यं हि कांस्यपात्रे स्थितं कांस्यपात्रेणापरेण चापि-हितं भवतीति सापिधानमित्युक्तत्वात् ( कौ० १२।१।२४ ), सूत्रान्तराच्च । एवं त्रिशाखं कुशत्रयं पात्रेण युज्यते, तत्र द्वाभ्यां शाखाभ्यां पात्रस्याधस्तात् संयोगः, उपरिष्टाच्चैकशाखाया इति स्थितिः । पात्रद्वय-कुशत्रययोगे ह पञ्चानुचरत्वं सम्भवतीति पात्रद्वयस्यैकत्वं कुशत्रयस्य चैकत्वमभिप्रेत्य द्व्यनुचर इति समञ्जसम् ।

मधुपर्कं पूज्यो मधुवातेति तिसृभिर्ऋग्भिरभिमन्त्रयेत् । मन्त्रार्थस्तु मधुपर्ककर्मानुसारमेवं भवति—

मधु मधुप्रधानमिदं कर्म । तृतीयात्र लुप्ता, ततश्चैतेन कर्मणा मधु पर्काख्येन वाताः प्राणवायवः ऋतायते । ऋतं ब्रह्म (श० ब्रा० १।१।४।१०)। ब्रह्म यथा शुच्यशुचिजनव्यापकमपि सन्निर्विकारं निर्गुणञ्चोपाधिना सर्वं विधत्ते, एवमेव ममैतेन मधुपर्ककर्मणा अभूततद्भावत्वेन सम्भाविता-शुचित्वविकाररहिताः प्राणवायवो ब्रह्म इव सर्वयोग्या भवन्ति । मधु मधुपर्काख्येन कर्मणा सिन्धवः नद्यो मामशुचित्वेऽपि शुचित्वेन क्षरन्ति । अथवा सिन्धवः शरीरगता नाड्यः इन्द्रियाणि वा आगाम्याशौचनिमित्ता-शुचित्वं क्षरन्ति प्रवहन्ति निशायन्तीति भावः । एतदुभयाशिषा मधुपर्क-कर्मणा स्वस्य प्राणेन्द्रिययोर्भावि अशुचित्वं नास्तीति प्रतिपाद्यते । अतएव च मम शुचित्वात् नः अस्माकं गावः वेदवाचः माध्वीः मधुराः सर्वक्रियोप-युक्ता भवन्तु । अमोघाः सन्त्विति भावः । इत्येवं प्रथममभिमन्त्रणम् ।

ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः।
माध्वीर्नः सन्त्वोषधीः ॥२॥ **द्वितीयम्।**

ॐ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः।
मधु द्यौरस्तु नः पिता ॥ ३ ॥ **तृतीयम्।**

तथा प्रतिमन्त्रणम्—

---

मम नक्तं रात्रिवेलाः उत उषसः दिनवेलाश्च मधु मधुरवत् सर्वोपभोग्या भवन्तु। मत्स्पृष्टं पार्थिवं पृथिव्या उत्पन्नं रजः रञ्जनीयमाह्लादकारि द्रव्यजातं मधु मधुरं सर्वोपभोग्यं भवतु। मधुपर्ककर्मणा मम च शुचित्वात् नः अस्माकम् ओषधीः व्रीहिगोधूमादिभक्ष्यद्रव्यादयस्तत्कृतव्यञ्जनादयश्च माध्वीः अशुचित्वव्यपनयनेन भक्ष्यत्वान्मधुररसोपेताः सन्तु भवन्तु। मन्त्रेणानेन स्वसम्बन्धिनः स्वीयद्रव्यसम्बन्धिनश्चाशौचाद्यशुचित्वं निवृत्तं भवति मधुपर्केणेति बोध्यते। इत्येवं द्वितीयाभिमन्त्रणम्।

नः अस्माकं क्रियाकाण्डसम्बद्धो वनस्पतिः वनानां पतिः पालयिता वा अग्निः मधुमान् मधुररसवत् ब्रह्म इव वा सर्वोपयोगी भवतु। षूञ् प्रसवे धातोः सूर्यः। अस्माभिः प्रसूतं सम्पादितं विहितं क्रियाजातमस्मै यजमानाय मधुमान् मधुररसवदुपभोग्यं भवतु। नः अस्माकं पिता पालकः द्यौः द्युलोकः सूर्यो वा। द्युलोकादुत्पन्नं वस्तुजातं मत्स्पृष्टं सदपि मधु मधुरं सर्वोपभोग्यं भवतु। इत्येवं तृतीयाभिमन्त्रणम्।

एभिर्मन्त्रैः गृहीतमधुपर्काणामृत्विजादीनामाशौचादिसत्त्वेऽपि सामान्यतः आशौचाशुचितस्य, तत्स्पृष्टस्य वस्तुजातस्य, वह्नेस्तदुच्चारिताया वेदवाचस्तदनुष्ठितस्य क्रियाकलापस्य च ब्रह्मण इव निर्विकारत्वं मधुरवदुपयोगित्वं भवतीति बोध्यते। एते त्रयोऽपि मन्त्राः ऋग्यजुर्वेदयोः संहितासु पठिताः। परं कौशिकगृह्योक्तानामेतेषामुत्तरार्द्धर्चानुपूर्वी भिन्ना एव। ऋगादिषु प्रथममन्त्रोत्तरार्द्धर्चः 'माध्वीर्नः सन्त्वोषधीः' इति, द्वितीयोत्तरार्द्धर्चः 'मधु द्यौरस्तु नः पिता' इति, तृतीयोत्तरार्द्धर्चश्च 'माध्वीर्गावो भवन्तु नः' इति वर्तते। एतानेव मन्त्रांस्तथैवोच्चार्य पुनः प्रतिमन्त्रणं कुर्यात्। प्रतिमन्त्रणमन्त्रेषु मधुपर्कप्रदातुरभिवृद्धिः प्रार्थ्यते।

ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।
माध्वीर्गावो भवन्तु नः ॥ १ ॥ **प्रथमम्।**

ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः।
माध्वीर्नः सन्त्वोषधीः ॥ २ ॥ **द्वितीयम्।**

ॐ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः।
मधु द्यौरस्तु नः पिता ॥ ३ ॥ **तृतीयम्।**

---

**तथा च मन्त्रार्थः —**

ऋतं यज्ञं पूजनमिच्छतीति ऋतयन्, तस्मै ऋतयते पूजकाय यजमानाय वाता वायवो मधु माधुर्योपेतं कर्मफलं क्षरन्ति वर्षन्ति प्रयच्छन्तीत्यर्थः। तथा सिन्धवः स्यन्दनशीला नद्यः समुद्रा वा मधु माधुर्योपेतं स्वकीयं रसमुदकं क्षरन्ति स्रवन्त्वित्यर्थः। गावः यज्ञसाधनभूता रश्मयः अग्निहोत्राद्यर्था धेनवो वा नः अस्माकं माध्वीः मधुमत्यो रसवत्यो भवन्तु, रसो वै मधु ( श० ब्रा० ७।५।१।४ ) इति श्रुतेः। अथवा गावः माधुर्योपेतेन पयसा युक्ता भवन्तु। वातादीनि रसवन्त्यस्माकं भोग्यानि भवन्तीति भावः। एवं प्रथमप्रतिमन्त्रणम्।

नक्तं रात्रिर्नोऽस्माकं मधु मधुमती माधुर्योपेतफलप्रदा आनन्दकारिणी भवतु। उतापि च उषसः उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु। पार्थिवं रजः पृथिव्याः सम्बन्धी लोको मातृभूतो मधुमन्माधुर्यविशिष्टफलयुक्तो भवतु। रजःशब्दो लोकवाची, लोका रजांस्युच्यन्ते इति यास्कः (नि० ४।१९)। रजन्त्यस्मिन् जना इति रजः। ओषधीः, ओषः पाकः आसु धीयत इति ओषधयः फलपाकान्तास्ताश्च माध्वीः मधुररसोपेताः सन्तु। एवं द्वितीयप्रतिमन्त्रणम्।

वनस्पतिरश्वत्थादिः वनानां पालयिता तदभिमानी देवो वा मधुमान् रसवान् यजनसाधनभूतो माधुर्योपेतफलवान् वास्तु। सूर्यः सर्वस्य प्रेरकः सविता च मधुमान् सन्तापराहित्यलक्षणमाधुर्यरसोपेतोऽस्तु। पिता वृष्टिप्रदानेन सर्वेषां पालयिता पितृभूतो द्यौः द्युलोकोऽपि मधु मधुयुक्तो मधुररसप्रदाता भवतु। एवं तृतीयप्रतिमन्त्रणम्।

मन्त्रेषु सर्वत्र मधुशब्दादुत्तरस्य मत्वर्थीयस्य रकारस्य 'लुगकारेकाररेफाश्च वक्तव्याः' ( पा० ४४।१२८२ ) इति लङ्मन्तव्यः।

तत्सूर्यस्य त्वा चक्षुषा प्रतीक्ष इति प्रतीक्षते। **सूर्यस्य कौशिकः सूर्या पङ्क्तिः। ॐ सूर्यस्य त्वा चक्षुषा प्रतीक्षे।** अयुतोऽहं देवस्य त्वा सवितुरिति प्रतिगृह्य। **अयुतोऽहमेकावसाना ब्रह्मात्माऽनुष्टुप् देवस्य त्वा वैतानः सविताऽनुष्टुप्।**

**ॐ अयुतोऽहमयुतो म आत्माऽयुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे प्राणोऽयुतो मेऽपानोऽयुतो मे व्यानोऽयुतोऽहं सर्वः॥ १॥**

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा प्रतिगृह्णामि॥ २॥**

---

प्रतिमन्त्रणानन्तरं मधुपर्कद्रव्यं पूज्यः प्रतीक्षते, पदार्थस्य स्वीयनेत्राभ्यां सावहितं निरीक्षणं करोति, सूर्यस्येति सौत्रमन्त्रेण। सूर्यस्य सूर्यदेवताकेन चक्षुषा चक्षुरिन्द्रियेण प्रतीक्षे निरीक्षणं करोमीति मन्त्रार्थः। ततोऽयुतोऽहं देवस्य त्वेति मन्त्रद्वयेन पूज्यः प्रतिगृह्णाति। प्रदानमूलकं हस्तावयवेन स्वीकरणं प्रतिग्रहः, तत्करोति। मन्त्रार्थस्त्वेवम्—

अहं साङ्गशरीराभिमानी कर्मानुतिष्ठासुः अयुतः सम्पूर्णः। मे मम आत्मा जीवः अयुतः सम्पूर्णः। अथवा आत्मशब्देन शरीरमुच्यते, 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इत्यभिधातृभिः शरीरवाचकत्वेन प्रयुक्तत्वात्। तथा चक्षुः सर्वपदार्थविषयज्ञानसाधनं चक्षुरिन्द्रियम्, श्रोत्रं वैदिकमन्त्रश्रवणसाधनं श्रवणेन्द्रियम्। प्राणः, हृदयादारभ्य नासिकारन्ध्रान्निर्गच्छन् वायुः प्राण इत्युच्यते। अपानः पायुद्वारान्निर्गच्छन् वायुः। अपानित्यवाङ्मुखः चेष्टत इति व्युत्पत्तेरपानः। व्यानः प्राणापानसन्धिरूपो वायुः। केचिच्छरीरवायोः प्राणादिपञ्चवृत्तित्वं समामनन्ति, अन्ये तु वृत्तित्रयवत्त्वम्। अयुतोऽहं सर्वं इत्युक्तानुक्तावयवेन्द्रियसाकल्यायोक्तम्।

द्वितीयमन्त्रार्थः—सवितुः सर्वस्य प्रसवितुर्देवस्य प्रसवे अनुज्ञायामश्विनोर्देवयोः अध्वर्योर्बाहुभ्यां पूष्णो देवस्य हस्ताभ्याम्। अंसप्रभृतिप्रकोष्ठपर्यन्तौ बाहू। तदाद्यङ्गुल्यग्रपर्यन्तौ हस्ताविति विभागः। प्रसूतः प्रेरितोऽनुज्ञातो वा त्वा त्वां, क्रियमाणं कर्म मधुपर्काख्यं सम्बोध्यते, आरभे उपक्रमे प्रयोक्ता अहम्। सर्वेन्द्रियसम्पन्नः सवित्रानुज्ञातः अश्विनोर्बाहुभ्यां पूष्णश्च हस्ताभ्यां कर्मसु व्याप्रिय इत्यर्थः। रभ्धातू राभस्ये, राभस्यमुपक्रमः।

पुरोमुखं प्राग्दण्डं निदधाति, पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति भूमौ प्रतिष्ठाप्य। **पृथिव्यास्त्वा कौशिको लिङ्गोक्ता गायत्री। पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे। अपिधानपात्रमूर्ध्वमुखं भूमौ प्रतिष्ठाप्य,**

**पवित्रे कुरुते। दर्भावप्रच्छिन्नप्रान्तौ प्रक्षाल्य अनुलोममनुमार्ष्टि। विष्णोः कौशिको विष्णुर्गायत्री।**

**ॐ विष्णोर्मनसा पूते स्थः।**

**उदगग्राभ्यां पवित्राभ्यामाज्यसमानेन मधुपर्कमुत्पुनाति। विष्णोः कौशिको विष्णुर्जगती। ॐ विष्णोर्मनसा पूतमसि, प्रथमम्।**

---

एवं पूज्यो मधुपर्कं प्रतिगृह्य तदपिधानपात्रं पुरोमुखं स्वस्याव्यवहितमग्रत ऊर्ध्वमुखं प्राग्दण्डं, दण्डः अग्रतासूचको भागः, तं प्राच्यां दिशि कृत्वा स्थापयेत्। अर्घ्यस्य प्रत्यङ्मुखतयोपविष्टत्वात् ( कौ० १२।१।१४ ) पात्रस्याग्रं स स्वाभिमुखं कुर्यादिति भावः। भूमावविपर्यासेन स्थापनं निधानं, तत्करोति निदधातीत्यर्थः। मधुपर्कपात्रमपि पृथिव्यास्त्वेति सौत्रमन्त्रेण सुदृढं संस्थाप्य पवित्रनिर्माणमुत्पवनार्थं करोति। मन्त्रार्थ एवम्—

हे मधुपर्क, पृथिव्याः नाभौ मध्ये त्वां सादयामि स्थापयामि। यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति एवमिमं मधुपर्कमदित्याः अदीनायाः मातुः भूम्या उपस्थे अङ्के उत्सङ्गे सादयामि। सुप्तं पुत्रमिव मधुपर्कं बाधकेभ्यस्त्वं पालयेति शेषः।

समावप्रच्छिन्नप्रान्तौ अप्रशीर्णाग्रावनन्तर्गर्भौ कुशौ कुशत्रयेणान्येन विधिना च्छिन्नौ पवित्राख्यौ भवतः। पवित्राख्यकुशपत्रे पवित्रे, ते यथाविधि सम्पाद्य जलेन प्रक्षाल्य अनुलोमं मूलमारभ्याग्रपर्यन्तमनुमार्जयेत्। तत्र सौत्रो मन्त्रो विष्णोर्मनसेति। हे पवित्रे युवां विष्णोर्मनसा विष्णुदेवताकेन मम मनसा व्यापकेन वा मनस्तत्त्वेन पूते पवित्रे स्थो भवथः। मनःपूतं समाचरेदित्यादिस्मृतिवाक्यैः पवित्रकरणे मनस एव प्राधान्यम्। तत उत्तराग्राभ्यां पवित्राभ्यामाज्योत्पवनवन्मधुपर्कोत्पवनं चतुष्कृत्वः विष्णोर्मनसेति सौत्रमन्त्रैः। प्रथमो मन्त्र उक्तार्थः।

**देवस्त्वा कौशिकः सविता बृहती। ॐ देवस्त्वा सवितोत्पुनातु, द्वितीयम्। अच्छिद्रेण कौशिको लिङ्गोक्ता गायत्री। ॐ अच्छिद्रेण त्वा पवित्रेण शतधारेण सहस्रधारेण सुप्वोत्पुनामि, तृतीयम्। तूष्णीं चतुर्थम्। पवित्रत्यागः।** द्वाभ्यामङ्गुलिभ्यां प्रदक्षिणमाचाल्य अनामिकयाङ्गुल्याङ्गुष्ठेन च सङ्गृह्य प्राश्नाति। **तत्सवितुरेकादश कौशिको लिङ्गोक्तास्तृतीया पङ्क्तिर्नवमदशम्यावनुष्टुभावन्त्या गायत्री शेषा बृहत्यः।**

---

देवस्त्वेति द्वितीयमुत्पवनम्। हे मधुपर्क, सविता प्रेरको देवः त्वा त्वाम् उत्पुनातु अनभीप्सितपदार्थान् त्वत्त उद्गमय्य शोधयतु। अच्छिद्रेणेति तृतीय उत्पवनमन्त्रः। हे मधुपर्क, त्वा त्वामच्छिद्रेण छिद्रविहीनेन सवव्यापकेनेत्यर्थः, दैविकेन पवित्रेण शोधकेन वायुरूपेणोत्पुनामि। यो वा अयं पवत एषोऽच्छिद्रं पवित्रम् ( श० ब्रा० १।१।३।६ ) इति श्रुतेरत्र वायोः पवित्रत्वमुक्तम्। तथा च भौतिकेन प्रकृतेन कुशपत्रद्वयरूपेण शतधारेण सहस्रधारेण च, शतसंख्याः सहस्रसंख्याश्च धारा यस्मिँस्तथाविधेन पवित्रेण। सूक्ष्मैः पवित्रच्छिद्रैः स्थाल्यां पतन्तीनां मधुपर्कधाराणां शतसहस्रसंख्याकानां सद्भावाच्छोधकत्वमाहर्तुं शतादिविशेषणम्। सुप्वेति पवित्रविशेषणम्। सुष्ठु पुनातीति तेन साधुपवनेन पवित्रेणोत्पुनामि शोधयामीत्यर्थः। चतुर्थमुत्पवनं तूष्णीं कृत्वा पवित्रे त्यजेत्।

अथ मधुपर्कप्राशनप्रकार उच्यते। द्वाभ्यामङ्गुलिभ्यां सामर्थ्यान्मध्यमानामिकाभ्यां पूज्यो मधुपर्कं प्रदिक्षणं दक्षिणावर्तमाचाल्य, मधुपर्कत्वेन स्थापितनानापदार्थस्य मिश्रणायाङ्गुलिभ्रामणं कृत्वा। प्रतिहस्तं पञ्चाङ्गुलयो भवन्ति, तत्र प्रसारितहस्तस्य सर्वस्थूलः सर्वह्रस्वश्च बहिःप्रसृतोऽङ्गुलिजातीयोंऽशः अङ्गुष्ठम्। अङ्गुष्ठस्य समीपस्थाङ्गुलिस्तर्जनी, तदुत्तरं चैकैकशो मध्यमा, अनामिका, कनिष्ठिका चेत्यङ्गुलिव्यपदेशः। तत्रानामिकया कनिष्ठिकापूर्ववर्तिन्या अङ्गुष्ठेन च सहकृतया मधुपर्कं सङ्गृह्य, सावहितं यावद्ग्रहं पदार्थैकदेशमवयवेन पृथक्कृत्य, प्राश्नाति स्वमुखे प्रक्षिप्य गलबिलस्याधो गमयति। तदिदं मधुपर्कप्राशनं समन्त्रकं द्वादशकृत्वः। प्राशने च तत्सवितुरित्यादयः प्रणवपूर्वका व्याहृतिबीजसावित्र्यादिरूपाः स्पष्टार्थाः प्रसिद्धार्थाश्च द्वादश मन्त्राः सूत्रोक्ताः। द्वादशमन्त्रैः सविधि

ॐ भूस्तत्सवितुर्वरेण्यं भूः स्वाहा--इति प्रथमम् ।

ॐ भर्गो देवस्य धीमहि भुवः स्वाहा–इति द्वितीयम् ।

ॐ धियो यो नः प्रचोदयात् स्वः स्वाहा–इति तृतीयम् ।

ॐ वयं देवस्य धीमहि जनत्स्वाहा—इति चतुर्थम् ।

ॐ तुरं देवस्य भोजनं वृधत्स्वाहा—इति पञ्चमम् ।

ॐ करत्स्वाहा—इति षष्ठम् ।

ॐ रुहत्स्वाहा—इति सप्तमम् ।

ॐ महत्स्वाहा—इति अष्टमम् ।

ॐ तत्स्वाहा--इति नवमम् ।

ॐ शं स्वाहा–इति दशमम् ।

ॐ इत्येकादशम् ।

ॐ । तूष्णीं द्वादशम् ।

तस्य भूयोमात्रमिव भुक्त्वा **शाखान्तरात् सर्वं वा प्राश्य स्मार्ताचमनं कृत्वा, शेषं** ब्राह्मणाय श्रोत्रियाय प्रयच्छेत् । श्रोत्रियस्यालाभे वृषलाय प्रयच्छेत् ।

---

प्रशानानन्तरं तस्य मधुपर्कस्य भूयोमात्रम्, उपस्थितपदार्थस्याधिको भागः भूयोमात्रं, यथारुच्यधिकभागमेव भुक्त्वा अद्रवपदार्थस्य स्वगलबिलाधोगमनं कारयित्वा, अथवा शाखान्तरेषु दृष्टत्वात् कृत्स्नस्यैव मधुपर्कपदार्थस्य भक्षणं कृत्वेति देवभद्रः । स्मार्ताचमनं केशवाय नम इत्यादिरूपं कुर्यात् । अत्र-देवभद्रोक्तं स्मार्ताचमनपदं जीवभिराचम्येत्यादिपूर्वोक्तसौत्राचमनविधि-व्यतिरिक्तविषयकं मन्तव्यम् । एवमाचम्य मधुपर्कद्रव्यस्य सति शिष्टत्वे शेषभागं श्रोत्रियाय ब्राह्मणाय दद्यात् । श्रोत्रियोऽत्र वेदाध्येता स्वशिष्यः पुत्रो वा, 'पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात्' इति पारस्करसूत्रेण (१।३।२२) एकवाक्यत्वात् । इदञ्च श्रोत्रियाय दानं ब्राह्मणस्यैव भवति । इतरवर्णोऽर्च्यश्चेद्वृषलायैव दानं, तस्याध्यापनानधिकारात् ।

श्रोत्रियब्राह्मणालाभे तु ब्राह्मणस्यापि वृषलाय दानम् । अलाभोऽत्राध्यापयितुर्ब्राह्मणस्य स्वशिष्यानुपस्थितिः । अन्यवर्णयोस्त्वलाभो नित्यसिद्ध एव । अतस्तयोस्तु वृषलायैव दानं 'मा ब्राह्मणायोच्छिष्टं दात' (कौ० १२।२।२०) इत्यादिना प्रतिपदमुक्तम् । 'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः' इत्यमरोक्त्या (२।१०।१) शूद्रो वृषलः स्वसेवकः स्वावरवर्णो वा वृषलः ।

अथास्मै गां वेदयन्ते—गौर्भो३ इति । **गौः कौशिको लिङ्गोक्तोष्णिक् ।** ॐ गौर्भो३ः **प्रतिगृह्यताम् ।** तां प्रतिमन्त्रयते । **भूतमसि कौशिको लिङ्गोक्ताऽनुष्टुप् ।**

ॐ भूतमसि भवदस्यन्नं प्राणो बहुर्भव ।
ज्येष्ठं यन्नाम नामत ॐ भूर्भुवः स्वर्जनदोम् ।। ( इति )

अतिसृजति । **मातादित्यानां कौशिको लिङ्गोक्ता जगती ।**

ॐ मातादित्यानां दुहिता वसूनां स्वसा रुद्राणाममृतस्य नाभिः ।
प्र णो वोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट ।।

---

अथ पूज्याय गां वेदयन्ते । विद्ऌ लाभे धातुः । अर्च्यं गां प्रापयन्तीति भावः । आत्मनेपदपरिग्रहः अतिसृष्टाया गोरर्चकग्राह्यत्वार्थः । गोनिवेदने गौर्भो इत्यादिः सौत्रो मन्त्रः । निवेदितां गां पूज्यः प्रतिमन्त्रयते, सम्बद्ध-पदार्थमुद्दिश्य मन्त्रपाठं करोति । प्रतिमन्त्रणे सौत्रो भूतमसीत्यादिर्मन्त्रः । तथा च मन्त्रार्थः—

गवाख्यतत्त्वं सम्बोध्यते । त्वं भूतमतीतमसि, भवदनागतमपि यत्तत्त्व-मेवासि, अन्नतत्त्वमपि त्वमेवासि । गोपशोः कृषिकार्ये महोपयोगित्वा-दन्नोत्पादकत्वमत्र लक्ष्यते । तथैव चाबालवृद्धानां प्राणधारणात् पय आदिना पोषणात् तस्य प्राणरूपत्वमुच्यते । त्वं प्राणः प्राणसन्धारकः समेषामसि । एतस्मात् कारणाल्लोकोपकारकत्वाच्च त्वमस्माकं कृते बहुः प्रभूतरूपेण भव । तथा नामतोऽपि प्रसिद्ध्यापि यज्ज्येष्ठं प्रसिद्धतमं गवाख्यं नाम तत् त्वं धारयसि । सर्वप्रसिद्धोऽसीतिभावः । शेषा व्याहृतयः ।

प्रतिमन्त्रणानन्तरं गामतिसृजति, सर्वथा स्वत्वपरिहारेण विसर्जयति । सृज विसर्गे । अतिसर्जने मातादित्यानामिति मन्त्रः । अर्थस्तु—इयं गौः रुद्रा-णामपि माता, वसूनां धनाधिष्ठातॄणां देवानां दुहिता पुत्री, आदित्यानां प्रकाशाधिष्ठातृदेवानां स्वसा भगिनि, अमृतस्य क्षीरादिरूपस्य च नाभि-राश्रयभूता वर्तते । अतोऽहं प्रवोचं प्रब्रवीमि यच्चिकितुषे चेतनावते जनाय पुम्मात्राय मह्यं, मां तोष्टुं यूयमिमामनागामनपराधामपापामदितिम-खण्डनीयां देवमातरं वा पयोदानात्, एवंभूतां गां मा वधिष्ट मा हत ।

ॐ तृणानि गौरत्तु । **गवे तृणानि भक्षणार्थं दद्यात् ।**

---

एवं हि गोरुत्सर्गे कृते ॐ तृणानि गौरत्त्विति सौत्रमन्त्रेण गवे तृणादिकं भक्षणार्थमुपकल्पयेदिति अन्नाहारपक्षः कौशिकोक्तः । कलौ गवालम्भादिवर्जनाद् देवभद्रेणायमेव पक्षः समादृतः । अपरस्तु पक्षः उपासकानाम् । 'शराभ्यास उपासनम्' इत्याभिधानोक्तेः (अ० को० २।८।८६) उपासका मांसाशिनः । तेषां कृते तु कौशिकेनान्य एव विधिरुपदिष्टः । सोऽप्यस्माभिरत्र समासेन विविच्यते । तथा च सूत्रम्—

**नालोहितो मधुपर्को भवति** इति । लोहित इति संज्ञपनोपलक्षणम् । अलोहितः विशसनजनितरक्तपातहीनः पशुसंज्ञपनरहितो मधुपर्को न भवतीति । एष एकेषामाचार्याणां पक्षः, पूर्वं सूत्रकारेण गोरुत्सर्गविधानात् । यदि कश्चनार्घ्यो मधुपर्के पशोः संज्ञपनपक्षपरिग्रहीता स्यात् तदा विधिमाह—**नानुज्ञानमधीमह इति कुरुतेत्येव ब्रूयात् इति ।**

अयं भावः—गोर्वेदनमर्चयितुः प्रागुक्तम् (कौ० १२।३।१२) । तदनन्तरमर्च्यस्यैवोत्सर्जनक्रिया त्रिषु सूत्रेषु प्रतिपादिता । अत एतत्सूत्रोक्तं कर्मापि वचनात्मकमर्च्यकर्तृकमेव । एवञ्चार्च्यो यदि पशूत्सर्जनपक्षं नानुमन्यते तदा सोऽर्चकं प्रति वदेत् 'नानुज्ञानमधीमहे, कुरुत' इति । अनुज्ञा नाम पराभिप्रेतक्रियानुमोदनम् । अनुज्ञानं पशूत्सर्गपक्षस्यानुमोदनं स्वीकृतिं वयमर्च्याः न नहि अधीमहे अध्ययने कुर्मः । अध्ययनं हि बोधितक्रियापर्यवसायि । साम्प्रदायिकेन व्यवस्थितविकल्पेन नानुमन्यामहे । उत्सर्गपक्षं न स्वीकुर्म इति फलितोऽर्थः । तस्मात् पशोः संज्ञपनं कुरुत इत्यर्चकाय वदेत् । मन्त्रयोः एकस्यार्च्यस्य सन्ततोक्तावपि 'इत्येव ब्रूयात्' इत्यनेन संज्ञपनपक्षस्थैर्यत्वेऽपि च, मध्ये इतिशब्दः संज्ञपनपक्षपरिग्राहिणामेवेयमुक्तिरिति ज्ञापनार्थः ।

अपार्चयिताच्र्यस्य संज्ञापनाभिमतं ज्ञात्वा—**स्वधिते मैनं हिंसीरिति शास्त्रं प्रयच्छति ।** संज्ञपनसाधनं शस्त्रमादाय 'स्वधिते मैनं हिंसीः' इत्येतावता मन्त्रेणार्च्याय शस्त्रं प्रयच्छति प्रददाति । हे स्वधिते, शस्त्र एनमर्च्यं मा हिंसीः मा प्रहर इति मन्त्रार्थः । अथार्चकः—**पाप्मानं मेऽपजहीति कर्तारमनुमन्त्रयते ।** कृती छेदने धातोः कर्तारं शस्त्रेण पशोर्घातयितारमनुमन्त्रयते, अनुलक्ष्य मन्त्रं कथयति—पाप्मानं मेऽपजहीति ।

सूयवसादिति प्रतिष्ठमानामनुमन्त्रयते । सूयवसादथर्वा गौस्त्रिष्टुप् ।

सूयवसाद् भगवती हि भूया अधा वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ।।

मम च यजमानस्य च पाप्मा हतः इति ब्रूयादिति शिवम् ।

---

एवं विशसनानन्तरं कौशिकेन आग्नेयीं वपां कुर्युः इति मधुपर्काङ्गत्वेनाग्नेयवपायागः समुपदिष्टः स चाथर्वणिकानां विशिष्यते । इत्येव संक्षेपेणोपासकपक्षः प्रदर्शितः । अन्नाहारपक्षग्रहणे तु वपास्थाने अन्नहोम एव आग्नेयो भवतीति—आहृतेऽग्ने जुहोति यत्कामकामयमाना इत्येतया इति सूत्राशयः ।

तथा च ऋचोऽर्थः—यत्कामकामयमाना इत्येकं पदम् । हे अग्ने, यं काममभिलषन्तो वयं ते तुभ्यं हविः इदमन्नरूपं कृण्मसि कुर्मः, नः अस्माकं तत् अभिलाषजातं सर्वं पूर्णं समृद्धयताम्, सिद्धं भवतु । अथ एतस्मात्कारणात् एतस्यास्मत्प्रदत्तस्य हविषः हूयमानस्य देवोद्देश्यकद्रव्यस्य वीहि भक्षणं कुरु, स्वाहा स्वत्वं मया परित्यक्तं तवैवेदं न ममेति भावः ।

गवे तृणप्रदानानन्तरं सूयवसादितिमन्त्रेण प्रतिष्ठमानां स्वगोष्ठं गच्छन्तीं तामनुमन्त्रयते । 'गृहा वै प्रतिष्ठा' ( श० ब्रा० १।९।३।१८ ) इति श्रुत्यनुरोधेनात्र प्रतिष्ठमानां स्वगृहं प्रयान्तीमित्यर्थः । अनुपूर्वो मन्त्रयतिर्मन्त्रोच्चारणे इति सोमादित्यः ( वै० श्रौ० ५।१।२ ) । मन्त्रोच्चारणं करोति । तथा च मन्त्रार्थः —

हे धर्मदुघे, सूयवसात् शोभनतृणानि शोभनं यवसमदती त्वं भगवती धनवती भाग्यवती वा भूयाः । हीति पादपूरणः । अध अनन्तरं वयं भगवन्तः धनवन्तः स्याम भूयास्म । हे अघ्न्ये अहिंस्ये गौः विश्वदानीं सर्वदैव तृणं घासमद्धि भक्षय । तथा आचरन्ती सर्वतश्चरन्ती त्वं शुद्धं निर्मलमुदकं पिब च । ततो मम चेति मन्त्रेणाचार्यः सर्वेषां पापनिर्हरणार्थमाशीः प्रार्थयेदिति शिवम् ।

वैदिकानां हितार्थाय प्रयोगोऽयं मया कृतः ।
कौशिकास्तेन तुष्यन्तु सञ्चरन्तु सुखेन हि ॥

इति श्रीमन्महायाज्ञिक—नागरज्ञातीय — पाठकश्रीरामचन्द्रसुनु-गङ्गाधरपाठकवंशसम्भूत—पाठकश्रीबलभद्रात्मज — माध्यन्दिनशाखीय—मौनमन्त्रसूत्रकृद्देवभद्रकृते प्रयोगदीपेऽथर्ववेदीयकौशिकगृह्यसूत्रानुसारी मधुपर्कप्रयोगः ।

---

इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।
वाग्यज्ञेनार्चितो देवः प्रीयतां वेदपूरुषः ॥

इति श्रीमद्वैदिकसार्वभौम—पण्डितप्रवरभगवत्प्रसादमिश्रात्मज-विद्वत्तिलक-धर्मतन्त्रकेसर्यादिविविधोपाध्यलङ्कृत-वैदिकप्रवर-श्रीगोपालचन्द्रमिश्रसूनु-माध्यन्दिनशाखीय-श्रीकिशोरमिश्रकृता
अथर्ववेदीयमधुपर्कप्रयोगव्याख्या सम्पूर्णा ।

●

# परिशिष्टभागः

- गृह्यकल्पोक्तमधुपर्कसूत्रपाठसङ्कलनम्
- अथर्ववेदीयमधुपर्कमन्त्रानुक्रमणी
- कतिपयपाश्चात्यविदुषां तिथ्यनुक्रमः

# परिशिष्टम्–१

## गृह्यकल्पोक्तमधुपर्कसूत्रपाठसङ्कलनम्

मधुपर्कक्रमो गृह्यान्तरेभ्यः कियान् संवदति, कुत्र च कथं विसंवदति, कस्मिंश्च विषये विशिष्टतामाधत्त इति तुलनात्मकाध्ययनाय विभिन्नानां वैदिकगृह्यसूत्राणां मधुपर्कसूत्रपाठ इह सङ्कलितः। तथात्र गृहीतानि गृह्यसूत्राणि—

| | |
|---|---|
| आश्वलायनगृह्यसूत्रम् | ऋग्वेदीयम् |
| पारस्करगृह्यसूत्रम् | शुक्लयजुर्वेदीयम् |
| बोधायनगृह्यसूत्रम् | कृष्णयजुर्वेदीयम् |
| आपस्तम्बगृह्यसूत्रम् | कृष्णयजुर्वेदीयम् |
| काठकगृह्यसूत्रम् | कृष्णयजुर्वेदीयम् |
| वाराहगृह्यसूत्रम् | कृष्णयजुर्वेदीयम् |
| गोभिलगृह्यसूत्रम् | सामवेदीयम् |
| खादिरगृह्यसूत्रम् | सामवेदीयम् |
| कौशिकगृह्यसूत्रम् | अथर्ववेदीयम् |

●

# आश्वलायनगृह्ये मधुपर्कसूत्रपाठः

१. ऋत्विजो वृत्वा मधुपर्कमाहरेत् ।

२. स्नातकायोपस्थिताय ।

३. राज्ञे च ।

४. आचार्यश्वसुरपितृव्यमातुलानाञ्च ।

५. दधनि मध्वानीय ।

६. सर्पिर्वा मध्वलाभे ।

७. विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ।

८. अहं वर्ष्म सजातानां विद्युतामिव सूर्यः, इदं तमधि तिष्ठामि यो मा कश्चाभिदासतीत्युदगग्रे विष्टर उपविशेत् आक्रम्य वा ।

९. पादौ प्रक्षालापयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ।

१०. सव्यं शूद्राय ।

११. प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्य ।

१२. अथाचमनीयेनान्वाचामति, अमृतोपस्तरणमसीति ।

१३. मधुपर्कमाह्रियमाणमीक्षेत, मित्रस्य त्वा चक्षुषा प्रतीक्ष इति ।

१४. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य, मधु वाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य, वसवस्त्वा गायत्रेण छन्दसा भक्षयन्त्विति पुरस्तान्निर्मार्ष्टि ।

१५. रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणतः, आदित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति पश्चात्, विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्त्वित्युत्तरतः, भूतेभ्यस्त्वेति मध्यात् त्रिरुद्गृह्य ।

१६. विराजो दोहोऽसीति प्रथमं प्राश्नीयात्, विराजो दोहमशीयेति द्वितीयम्, मयि दोहः पद्यायै विराज इति तृतीयम् ।

१७. न सर्वम् ।

१८. न तृप्ति गच्छेत ।

१९. ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेत्, अलाभेऽप्सु ।

२०. सर्वं वा ।

२१. अथाचमनीयेनान्वाचामति अमृतापिधानमसीति ।

२२. सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयम् ।

२३. आचान्तोदकाय गां वेदयन्ते ।

२४. हतो मे पाप्मा पाप्मा मे हत इति जपित्वा ओङ्कुरुतेति कारयिष्यन् ।

२५. माता रुद्राणां दुहिता वसूनामिति जपित्वा ओमुत्सृजतेत्युत्स्रक्ष्यन् ।

२६. नामांसो मधुपर्को भवति ।

( प्रथमाध्याये चतुर्विंशतितमी कण्डिका )

## पारस्करगृह्ये मधुपर्कसूत्रपाठः

१. षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति ।

२. प्रतिसंवत्सरानर्हयेयुः ।

३. यक्ष्यमाणास्त्वृत्विजः ।

४. आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति ।

५. आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन ।

६. अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ।

७. विष्टरं प्रतिगृह्णाति ।

८. वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः, इमन्तमभितिष्ठामि यो मा कश्चाभिदासतीत्येनमभ्युपविशति ।

९. पादयोरन्यं विष्टर आसीनाय ।

१०. सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ।

११. ब्राह्मणश्चेद् दक्षिणं प्रथमम् ।

१२. विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इति ।

१३. अर्घं प्रतिगृह्णात्याप: स्थ युष्माभिः सर्वान् कामानवाप्नवानीति ।

१४. निंनयन्नभिमन्त्रयते—समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत, अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इति ।

१५. आचामत्यामागन् यशसा संसृज वर्चसा, तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनामिति ।

१६. मित्रस्य त्वेति मधुपर्कं प्रतीक्षते ।

१७. देवस्य त्वेति प्रतिगृह्णाति ।

१८. सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति– नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामीति ।

१९. अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ।

२०. तस्य त्रिः प्राश्नाति—यन्मधुनो मधव्यं परमं रूपमन्नाद्यम्, तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति ।

२१. मधुमतीभिर्वा प्रत्यृचम् ।

२२. पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात् ।

२३. सर्वं वा प्राश्नीयात् ।

२४. प्राग् वा सञ्चरे निनयेत् ।

२५. आचम्य प्राणान्तसम्मृशति—वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेति ।

२६. आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह ।

२७. प्रत्याह–माता रुद्राणां···वधिष्ट, मम चामुष्य च पाप्मानं हनोमीति यद्यालभेत् ।

२८. अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत, ओमुत्सृजत तृणान्यत्त्विति ब्रूयात् ।

२९. न त्वेवामांसोऽर्घः स्यात् ।

३०. अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ।

३१. यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इतिश्रुतेः ।

( प्रथमकाण्डस्य तृतीया कण्डिका )

## बोधायनगृह्ये मधुपर्कसूत्रपाठः

१. आवेद्यार्घ्यं कुर्यात् ।

२. मध्येऽगारस्योदीचीनप्रतिषेवणा एरका उपस्तृणाति ।

३. तास्वहतानि बहुगुणान्युत्तरदशानि वासांस्यास्तीर्य तेष्वृत्विजः प्राङ्मुखा उपविशन्ति ।

४. उत्तरपूर्वे देशेऽगारस्य प्रावकूलान् दर्भान् संस्तीर्य तेष्वर्घ्यद्रव्याणि संसादयति ।

५. यावन्त ऋत्विजास्तावन्ति कांस्यानि पात्राणि सापिधानानि तावतः कूर्चान् ।

६. द्वावन्यौ परिग्रहणीयौ कूर्चौ ।

७. दधि मधु घृतमापः पयो वस्त्रयुगानि कुण्डलयुगानि ।

८. यस्यै गोः पयश्चमसः स्रगलङ्करणीयञ्चेति ।

९. पवित्रे कृत्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य कूर्चे कांस्यं निधाय तिरःपवित्रं मध्वानयति ।

१०. दधि पयो वा द्वितीयं स द्विवृत् ।

११. घृतं तृतीयं स त्रिवृत् ।

१२. यद्द्वितीयं तच्चतुर्थं स चतुर्वृत् ।

१३. आपः पञ्चमीः स पाङ्क्तः ।

१४. वर्षीयसा तेजोमयेनापिधाय नानापुरुषा अर्घ्यद्रव्याण्याददते अन्वगनु संव्रजताः ।

१५. कूर्चं इति कूर्चं प्राह ।

१६. तत् सुकूर्चं इतीतरः प्रतिगृह्णाति ।

१७. तं प्रदक्षिणं पर्यस्योदगावृत्य उपविशति ।

१८. पुरस्ताद् वैनं प्रत्यञ्चमुपोहते राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमिति ।

१९. अथास्मा उदपात्रमादाय कूर्चाभ्यां परिगृह्य पाद्या आप इति प्राह ।

२०. ता अभिमन्त्रयते आपः पादावनेजनीरिति ।

२१. दक्षिणं पादं पूर्वं ब्राह्मणाय प्रसारयति ।

२२. सव्यं शूद्राय ।

२३. स्त्री प्रक्षालयति पुमानभिषिञ्चति ।

२४. विपरीतमित्येके ।

२५. नियमात् पत्नीयजमानौ जङ्घे धावयतः ।

२६. अवनेक्तुः पाणी सम्मृशति मयि महो मयि भगो मयि भर्गो मयि यश इति ।

२७. अथाप उपस्पृश्य मयीन्द्रियं वीर्यम् इत्युरः प्रत्यात्मानं प्रत्यभिमृशते ।

२८. अपो व्रीहिभिर्यवैर्वा समुदायुत्य तथैव कूर्चाभ्यां परिगृह्यार्हणीया आप इति प्राह ।

२९. ता अभिमन्त्रयते आ म आगाद् वर्चसेति ।

३०. एकदेशमञ्जलावानीयमानमनुमन्त्रयते विराजोऽसीति ।

३१. अतिशिष्टाः पराचीर्निनीयमाना अनुमन्त्रयते समुद्रं वः प्रहिणोमीति ।

३२. अथ तथैव कूर्चाभ्यां परिगृह्योपस्तरणीया आप इति प्राह ।

३३. ताः पिबति अमृतोपस्तरणमसीति ।

३४. त्रिराचामेत् त्रिः परिमृजेत् द्विरित्येके ।

३५. आचान्तायापवृत्ताय तथैव कूर्चाभ्यां परिगृह्यार्घ्य इति प्राह, मधुपर्क इति वा ।

३६. मधुपर्कं प्रोक्तमनुमन्त्रयते त्रय्यै विद्यायै इति ।

३७. तमुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति देवस्य त्वेति ।

३८. तस्मिंश्चेत् किञ्चिदापतितं स्यातदङ्गुष्ठेन च महानाम्न्या चोपसङ्गृह्येमां दिशं निरस्यति नेष्टावृद्धिमिति ।

३९. अथाप उपस्पृश्य सर्वाभिरङ्गुलीभिः समुदायुत्य प्राश्नाति यत्मधुनो मधव्यमिति ।

## आपस्तम्बगृह्ये मधुपर्कसूत्रपाठः

१. अथैतदपरं तूष्णीमेव तीर्थे स्नात्वा तूष्णीं समिधमादधाति ।

२. यत्रास्मा अपचितिं कुर्वन्ति तत्कूर्चं उपविशति यथापुरस्तात् ।

३. एवमुत्तराभ्यां यथालिङ्गं राजा स्थपतिश्च ।

४. आपः पाद्या इति प्राह ।

५. उत्तरयाभिमन्त्र्य दक्षिणं पादं पूर्वं ब्राह्मणाय प्रयच्छेत् सव्यं शूद्राय ।

६. प्रक्षालयितारमुपस्पृश्योत्तरेण यजुषाऽत्मानं प्रत्यभिमृशेत् ।

७. कूर्चाभ्यां परिगृह्य मृन्मयेनार्हणीया आप इति प्राह ।

८. उत्तरयाभिमन्त्र्याञ्जलावेकदेश आनीयमान उत्तरं यजुर्जपेत् ।

९. शेषं पुरस्तान्निनीयमानमुत्तरयाऽनुमन्त्रयते ।

१०. दधि मध्विति संसृज्य कांस्येन वर्षीयसा पिधाय कूर्चाभ्यां परिगृह्य मधुपर्क इति प्राह ।

११. त्रिवृतमेके घृतञ्च ।

१२. पाङ्क्तमेके धानाः सक्तूंश्च ।

१३. उत्तराभ्यामभिमन्त्र्य यजुर्भ्यामप आचामति पुरस्तादुपरिष्टाच्चोत्तरया त्रिः प्राश्यानुकम्प्याय प्रयच्छेत् ।

१४. प्रतिगृह्यैव राजा स्थपतिर्वा पुरोहिताय ।

१५. गौरिति गां प्राह ।

१६. उत्तरयाभिमन्त्र्य तस्यै वपां श्रपयित्वोपस्तीर्णाभिघारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति ।

१७. यद्युत्सृजेदुपांशूत्तरां जपित्वोमुत्सृजतेत्युच्चैः ।

१८. अन्नं प्रोक्तमुपांशूत्तरैरभिमन्त्र्यों कल्पयतेत्युच्चैः ।

१९. आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्य एतत् कार्यम् ।

२०. सकृत् प्रवक्त्रे चित्राय ।

( पञ्चमपटलान्तर्गतस्त्रयोदशः खण्डः )

## काठकगृह्ये मधुपर्कसूत्रपाठः

१. षडर्घ्यार्हा भवन्त्याचार्य ऋत्विग् राजा विवाह्यः प्रियः स्नातक इति ।

२. अथैनमर्हयन्ति ।

३. आदौ च कर्मणः ।

४. अर्घ्यमुदकं सौषधं दर्भा इति ।

५. कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसाऽपिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते ।

६. मयि दोहोऽसि विराजो दोहः पाद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते ।

७. विष्टरोऽसि मातरि सीदेति विष्टरमास्तार्य तस्मिन्नुपविशति ।

८. विष्टर आसीनायैकैकं त्रिः प्राह ।

९. नैव भो इत्याह न मार्षेति ।

१०. शं नो देवीरित्यपोऽभिमन्त्र्य पाद्याभिः प्रक्षालयते दक्षिणं पादमवनेनिज इदमहमस्मिन् कुले ब्रह्मवर्चसं दधाम्युत्तरं पादमवनेनिज इदमहं मयि तेजो वीर्यमन्नाद्यं प्रजां पशून् ब्रह्मवर्चसं दधामीति ।

११. आपोहिष्ठीयाभिरर्घ्यं परिगृह्य सावित्रेण मधुपर्कं विष्टरोऽस्यन्तरिक्षमधिविश्रयस्वेति विष्टरमवकृष्योरुत्वेत्यवसार्य तच्चक्षुरित्यवेक्ष्य पृथिव्यास्त्वेति विष्टरे निधाय मधु वात ऋतायत इति तिसृभिः प्रदेशिन्या प्रदक्षिणमालोडयति ।

१२. वसवस्त्वाग्निराजानो……बृहस्पतिराजानो भक्षयन्त्विति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निमार्ष्टि ।

१३. यन्मधुनो……श्रीःश्रयतामिति मधुपर्कस्य चतुष्प्राशनात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति ।

१४. आचामत्यमृतोपस्तरणमसि ।

१५. तस्मा असिपाणिर्गां प्राह ।

१६. तां शास्ति मम चामुष्य च पाप्मानं जहि हतो मे पाप्मा पाप्मानं मे हतों कुरुतेति ।

१७. चतुरो नानागोत्रान् ब्राह्मणान् भोजयेत् ।

१८. एष आद्य उपायः ।

१९. यद्युत्सृजेन्माता रुद्राणामिति जपेत्; माता रुद्राणां……वधिष्ट; सूयवसाद्……माचरन्ती; ओमुत्सृजत, तृणान्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमङ्गं वा ।

२०. नामांसो मधुपर्कः स्यादिति ह विज्ञायते ।

२१. अपि वा घृतौदन एव स्यात् ।

( चतुर्विंशतितमी कण्डिका )

# वाराहगृह्ये मधुपर्कसूत्रपाठः

१. षडर्घ्यार्हा भवन्ति ऋत्विगाचार्यो विवाह्यो राजा स्नातकः प्रियश्चेति ।

२. अप्राकरणिकानापरिसंवत्सरादर्हयन्ति ।

३. अन्यत्र याज्यात् कर्मणो विवाहाच्च न जीवत्पितृकोऽर्घ्यं प्रतिगृह्णीयात् ।

४. कांस्ये चमसे वा सदधिन मध्वासिच्य वर्षीयसा पिधायाऽचमनीयप्रथमैः प्रतिपद्यन्ते ।

५. विराजो दोह्योऽसीति एकैकमाह्रियमाणं प्रतीक्षते ।

६. सावित्रेण विष्टरं प्रतिगृह्य अहं वर्ष्म सदृशानामित्येकस्मिन्नुपविशति ।

७. राष्ट्रभृदसीत्याचार्य आसन्दीमनुमन्त्रयते ।

८. मा त्वा जोषमित्यन्तरमधस्तात् पादयोर्विष्टरमुपकर्षति ।

९. विष्टरमासीनायैकं त्रिः प्राह ।

१०. नैव भो इत्याह ।

११. नम आर्षेयाय इति श्रुतिः ।

१२. स्पृशत्यर्घ्यं पाद्येन पादौ प्रक्षाल्य सावित्रेणोभयतो विष्टरं मधुपर्कं प्रतिगृह्य आदित्यास्त्वा पृष्ठे सादयामीति प्रतिष्ठाप्यावसाद्य सुवर्णस्य त्वा गरुत्मतश्चक्षुषाऽवेक्षे इत्यवेक्ष्य नमो रुद्राय पात्रसदे इति प्रादेशेन प्रतिदिशं व्युद्दिश्याङ्गुष्ठेनोपमध्यमया च मधु वाता ऋतायत इति तिसृभिः संसृजति ।

१३. अमृतोपस्तरणमसीत्युपस्तरति, सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति मधुपर्कं त्रिः प्राश्नाति भूयिष्ठम् ।

१४. सुहृदेऽवशिष्टं प्रयच्छति ।

१५. अमृतापिधानमसीत्याचामति ।

१६. असिपाणिर्गां प्राह हतो मे पाप्मेति ।

१७. ॐ कुरुतेति सम्प्रेष्यति ।

१८. चतुरवरान् ब्राह्मणान् नानागोत्रानित्येकैकं पञ्चाङ्गं पायसं वा भोजयेत् ।

१९. यद्युत्सृजेत् माता रुद्राणामिति, ॐ भूर्भुवः स्वरोम् इत्युत्सृजतु तृणान्यत्तूदकं पिबतु ।

२०. अथालङ्करणम्—अलङ्करणमसीति यथालिङ्गमङ्गानि संस्पृशति, अथ गन्धाच्छादने वाससी परिधास्ये यशोधास्ये इत्यहतं वासः परिधत्ते ।

२१. यदि पशुमालभते शन्नो मित्र इति पाणी प्रक्षाल्य यथार्थमालभनमित्येके ।

## गोभिलगृह्ये मधुपर्कसूत्रपाठः

१. उत्तरतो गां बध्वोपतिष्ठेरन् अर्हणा पुत्र वाससेति ।
२. इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामीति प्रतितिष्ठमानो जपेत् ।
३. यत्रैनमर्हयिष्यन्तः स्युः ।
४. यदा वाऽर्हयेयुः ।
५. विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वेदयेरन् :
६. या ओषधीरित्युदञ्चं विष्टरमास्तीर्याध्युपविशेत् ।
७. द्वौ चेत्पृथगृभ्याम् ।
८. पादयोरन्यम् ।
९. यतो देवीरित्यपः प्रेक्षेत ।
१०. सव्यं पादमवनेनिज इति सव्यं पादं प्रक्षालयेत्, दक्षिणं पादमवनेनिज इति दक्षिणं पादं प्रक्षालयेत् ।
११. पूर्वमन्यमपरमन्यमित्युभौ शेषेण ।
१२. अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् ।
१३. यशोऽसीत्याचमनीयमाचामेत् ।
१४. यशसो यशोऽसीति मधुपर्कं प्रतिगृह्णीयात् ।
१५. यशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षोऽसि श्रियं मयि धेहीति त्रिः पिबेत् ।
१६. तूष्णीं चतुर्थम् ।
१७. भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात् ।
१८. आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात् ।
१९. मुञ्च गां वरुणपाशाद् द्विषन्तं मेऽभिधेहीति तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकमिति ब्रूयात् ।
२०. माता रुद्राणामित्यनुमन्त्रयेत ।
२१. अन्यत्र यज्ञात् ।
२२. कुरुतेत्यधियज्ञम् ।
२३. षडर्घ्यार्हा भवन्ति ।
२४. आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति ।
२५. परिसंवत्सरानर्हयेयुः ।
२६. पुनर्यज्ञविवाहयोश्च ।

( चतुर्थप्रपाठके दशमी कण्डिका )

## खादिरगृह्ये मधुपर्कसूत्रपाठः

१. मधुपर्कं प्रतिग्रहीष्यन्निदमहमिमामिति प्रतितिष्ठञ्जपेदिति ।
२. अर्हयत्सु वा ।
३. विष्टरपाद्यार्घ्याचमनीयमधुपर्काणामेकैकं त्रिर्वेदयन्त इति ।
४. विष्टरौ पाद्यार्घ्याचमनीयमधुपर्का इति ।
५. गाञ्चेति ।
६. गामानीय उदञ्चं विष्टरमास्तीर्य या ओषधीरित्यध्यासीत ।
७. पादयोर्द्वितीयया द्वौ चेत् ।
८. अपः पश्येद् यतो देवीरिति ।
९. सव्यं पादमवसिञ्चेत् सव्यमिति ।
१०. दक्षिणं दक्षिणमिति ।
११. उभौ शेषेण ।
१२. अन्नस्य राष्ट्रीरसीत्यर्घ्यं प्रतिगृह्णीयात् ।
१३. यशोऽसीत्याचमनीयम् ।
१४. यशसो यशोऽसीति मधुपर्कम् ।
१५. त्रिः पिबेद् यशसो महसः श्रिय इति ।
१६. तूष्णीं चतुर्थम् ।
१७. भूयोऽभिवाद्य ब्राह्मणायोच्छिष्टं दद्यात् ।
१८. गां वेदितानुमन्त्रयेत मुञ्च गामिति ।
१९. अमुष्य चेत्यर्हयितुर्नाम ब्रूयात् ।
२०. एवमयज्ञे ।
२१. कुरुत इति यज्ञे ।
२२. आचार्यं ऋत्विक् स्नातको राजा विवाह्यः प्रिय इति षडर्घ्याः ।
२३. प्रतिसंवत्सरानर्हयेत् ।
२४. पुनर्यज्ञविवाहयोश्च ।

## कौशिकगृह्ये मधुपर्कसूत्रपाठः

### [ नवतितमी कण्डिका ]

१. मधुपर्कमाहारयिष्यन् दर्भानाहारयति ।
२. अथ विष्टरान् कारयति ।
३. स खल्वेकशाखमेव प्रथमं पाद्यं, द्विशाखमासनं, त्रिशाखं मधुपर्काय ।

४. स यावतो मन्येत तावत उपादाय, विविच्य, सम्पर्याप्य मूलानि च प्रान्तानि च, यथाविस्तीर्ण इव स्यादित्युपोत्कृष्य, मध्यदेशेऽभिसन्नह्यति ।

५. ऋतेन त्वा सत्येन त्वा तपसा त्वा, कर्मणा त्वेति सन्नह्यति ।

६. अथ ह सृजत्यतिसृष्टो द्वेष्टा योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ।

७. अस्य च दातुरिति दातारमीक्षते ।

८. अथोदकमाहारयति—पाद्यं भो इति ।

९. हिरण्यवर्णाभिः प्रतिमन्त्र्य, दक्षिणं पादं प्रथमं प्रकर्षति—मयि ब्रह्म च तपश्च धारयाणीति ।

१०. दक्षिणे प्रक्षालिते सव्यं प्रकर्षति—मयि क्षत्रञ्च विशश्च धारयाणीति ।

११. प्रक्षालितावनुमन्त्रयते—इमौ पादाववनिक्तौ ब्राह्मणं यशसावताम्, आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे ।

१२. अस्य च दातुरिति दातारमीक्षते ।

१३. अथासनमाहारयति—सविष्टरमासनं भो इति ।

१४. तस्मिन् प्रत्यङ्मुख उपविशति ।

१५. विमृग्वरीं पृथिवीमित्येतया विष्टरे पादौ प्रतिष्ठाप्याधिष्ठितो द्वेष्टा योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ।

१६. अस्य च दातुरिति दातारमीक्षते ।

१७. अथोदकमाहारयत्यर्घ्यं भो इति ।

१८. तत्प्रतिमन्त्रयते—अन्नानां मुखमसि मुखमहं श्रेष्ठः समानानां भूयासम्, आपोऽमृतं स्थामृतं मा कृणुत दासास्माकं बहवो भवन्त्वश्वावद् गोमन्मय्यस्तु पुष्टमों भूर्भुवः स्वर्जनदोमिति ।

१९. तूष्णीमध्यात्मं निनयति ।

२०. तेजोऽस्यमृतमसीति ललाटमालभते ।

२१. अथोदकमाहारयत्याचमनीयं भो इति ।

२२. जीवाभिराचम्य ।

२३. अथास्मै मधुपर्कं वेदयन्ते—द्व्यनुचरो मधुपर्को भो इति ।

२४. द्वाभ्यां शाखाभ्यामधस्तादेकयोपरिष्टात् सापिधानम् ।

२५. मधु वाता ऋतायत इत्येताभिरेवाभिमन्त्रणम् ।

२६. तथा प्रतिमन्त्रणम् ।

## [ एकनवतितमी कण्डिका ]

२७. मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्गावो भवन्तु नः ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । माध्वीर्नः सन्त्वोषधीः ॥
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । मधु द्यौरस्तु नः पिता ॥

२८. तत्सूर्यस्य त्वा चक्षुषा प्रतीक्ष इति प्रतीक्षते ।

२९. अयुतोऽहं देवस्य त्वा सवितुरिति प्रतिगृह्य पुरोमुखं प्राग्दण्डं निदधाति ।

३०. पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति भूमौ प्रतिष्ठाप्य ।

३१. द्वाभ्यामङ्गुलिभ्यां प्रदक्षिणमाचाल्यानामिकयाङ्गुल्याङ्गुष्ठेन च सङ्गृह्य प्राश्नाति ।

३२. ॐ भूस्तत्सवितुर्वरेण्यं भूः स्वाहेति प्रथमम् ।

३३. भर्गो देवस्य धीमहि भुवः स्वाहेति द्वितीयम् ।

३४. धियो यो नः प्रचोदयात् स्वः स्वाहेति तृतीयम् ।

३५. वयं देवस्य धीमहि जनत्स्वाहेति चतुर्थम् ।

३६. तुरं देवस्य भोजनं वृधत्स्वाहेति पञ्चमम् ।

३७. करत्स्वाहेति षष्ठम् ।

३८. रुहत्स्वाहेति सप्तमम् ।

३९. महत्स्वाहेत्यष्टमम् ।

४०. तत्स्वाहेति नवमम् ।

४१. शं स्वाहेति दशमम् ।

४२. ओमित्येकादशम् ।

४३. तूष्णीं द्वादशम् ।

४४. तस्य भूयोमात्रमिव भुक्त्वा ब्राह्मणाय श्रोत्रियाय प्रयच्छेत् ।

४५. श्रोत्रियालाभे वृषलाय प्रयच्छेत् ।

४६. अथाप्ययं निगमो भवति—सोममेतत् पिबत यत्किञ्चाश्नीत ब्राह्मणाः, मा ब्राह्मणायोच्छिष्टं दात मा सोमं पात्वसोमप, इति ।

## [ द्विनवतितमो कण्डिका ]

४७. दधि च मधु च ब्राह्मो मधुपर्कः ।

४८. पायस ऐन्द्रो मधुपर्कः ।

४९. मधु चाज्यं च सौम्यो मधुपर्कः ।

५०. मन्थश्चाज्यं च पौष्णो मधुपर्कः ।

५१. क्षीरं चाज्यं च सारस्वतो मधुपर्कः ।

५२. सुरा चाज्यं च मौसलो मधुपर्कः ।

५३. स खल्वेष द्वये भवति सौत्रामण्यां च राजसूये च ।

५४. उदकं चाज्यं च वारुणो मधुपर्कः ।

५५. तैलं चाज्यं च श्रावणो मधुपर्कः ।

५६. तैलश्च पिण्डश्च पारिव्राजको मधुपर्कः ।
५७. इति खल्वेष नवविधो मधुपर्को भवति ।
५८. अथास्मै गां वेदयन्ते गौर्भो इति ।
५९. तान्प्रतिमन्त्रयते—भूतमसि भवदस्यन्नं प्राणो बहुर्भव, ज्येष्ठं यन्नाम नामत ॐ भूर्भुवः स्वर्जनदोमिति ।
६०. अतिसृजति—मातादित्यानां दुहिता वसूनां स्वसा रुद्राणाममृतस्य नाभिः, प्र णो वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट, ॐ तृणानि गौरत्त्वित्याह ।
६१. सूयवसादिति प्रतिष्ठमानामनुमन्त्रयते ।
६२. नालोहितो मधुपर्को भवति ।
६३. नानुज्ञानमधीमह इति कुरुतेत्येव ब्रूयात् ।
६४. स्वधिते मैनं हिंसीरिति शस्त्रं प्रयच्छति ।
६५. पाप्मानं मेऽपजहीति कर्तारमनुमन्त्रयते ।
६६. आग्नेयीं वपां कुर्युः ।
६७. अपि वा ब्राह्मण एव प्राश्नीयात्तद्दैवतं हि तद्धविर्भवति ।
६८. अथास्मै स्नानमनुलेपनं मालाभ्यञ्जनमिति ।
६९. यदत्रोपसमाहार्यं भवति तदुपसमाहृत्य ।
७०. अथोपासकाः प्राप्योपासकाः स्मो भो इति वेदयन्ते ।
७१. तान्प्रतिमन्त्रयते—भूयांसो भूयास्म ये च नो भूयसः कार्ष्टापि च नोऽन्ये भूयांसो जायन्ताम् ।
७२. अस्य च दातुरिति दातारमीक्षते ।
७३. अथान्नाहाराः प्राप्यान्नाहाराः स्मो भो इति वेदयन्ते ।
७४. तान् प्रतिमन्त्रयते—अन्नादा भूयास्म ये च नोऽन्नादान्कार्ष्टापि च नोऽन्येऽन्नादा भूयांसो जायन्ताम् ।
७५. अस्य च दातुरिति दातारमीक्षते ।
७६. आहृतेऽन्ने जुहोति यत्काम कामयमाना इत्येतया ।
७७. यत्काम कामयमाना इदं कृण्मसि ते हविः, तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहेति ।
७८. एष आचार्यकल्प एष ऋत्विक्कल्प एष संयुक्तकल्प एष विवाहकल्प एषोऽतिथिकल्पः ।

( कण्डिकात्रयात्मको द्वादशाध्यायः )

# परिशिष्टम्--२

## कौशिकसूत्रानुसारिमधुपर्कपद्धत्युपयोगिनां मन्त्राणां सूची

**सूत्रपाठाङ्कः मन्त्राः**

● अच्छिद्रेण त्वा
(६) अतिसृष्टो द्वेष्टा
(१५) अधिष्ठितो द्वेष्टा
(७४) अन्नादा भूयास्म
(१८) अन्नानां मुखमसि
(७३) अन्नाहाराः स्मो
(२९) * अयुतोऽहम्
( अ० सं० १९।५१।१ )
(१७) अर्घ्यं भोः
(७,१२,१६,७२,७५) अस्य च दातुः
(२१) आचमनीयं भोः
(१८) आपोऽमृतं स्थ
(२२) * इन्द्र जीव
( अ० सं० १९।७०।१ )
(११) इमौ पादौ
(२२) * उपजीवा स्थ
( अ० सं० १९।६९।२ )
(७०) उपासकाः स्मो
(४२) ॐ
(५) ऋतेन त्वा
(३७) करत्स्वाहा
(५) कर्मणा त्वा
(६३) कुरुत
(५८) गौर्भोः
(२२) * जीवला स्थ
( अ० सं० १९।६९।४ )

**सूत्रपाठाङ्कः मन्त्राः**

(२२) * जीवा स्थ
( अ० सं० १९।६९।१ )
(४०) तत्स्वाहा
(५) तपसा त्वा
(३६) तुरं देवस्य
(६०) (ॐ) तृणानि गौरत्तु
(२०) तेजोऽसि
(२३) द्व्यनुचरो मधुपर्कः
● देवस्त्वा सविता
(२९) * देवस्य त्वा सवितुः
( अ० सं० १९।५१।२ )
(३४) धियो यो नः
(८) पाद्यं भोः
(६१) पाप्मानं मे
(३०) पृथिव्यास्त्वा नाभौ
(३३) भर्गो देवस्य
(५९) भूतमसि
(५९) (ॐ) भूर्भुवः स्वर्जनत्
(७१) भूयांसो भूयास्म
(३२) (ॐ) भूस्तत्सवितुः
(२७) मधुनक्तम् (ऋ० १।९०।७; मा० सं० १३।२८; तै० ४।२।९।३; तै० आ० १०।१०।२; श० ब्रा० १४।९।२।१२)

| सूत्रपाठाङ्कः | मन्त्राः |
|---|---|
| (२७) | मधुमान्नो ( ऋ० १।९०।८; मा० सं० १३।२९; तै० ४।२।९।३; तै० आ० १०।१०।२; श० ब्रा० १४।९।३।१३ ) |
| (२७) | मधुव्वाता ( ऋ० १।९०।६; मा० सं १३।२७; तै० ४।२।९।३; तै० आ० १०।१०।२; श० ब्रा० १४।९।३।११ ) |
| (१०) | मयि क्षत्रं |
| (९) | मयि ब्रह्म |
| (३९) | महत्स्वाहा |
| (६०) | मातादित्यानां (ऋ०८।१०१।१५) |
| (७६, ७७) | यत्काम कामय |
| (९) | * यासां देवा (अ० सं० १।३३।३) |
| (९) | * यासां राजा (अ० सं० १।३३।२; ऋ० ७।४९।३; तै० सं० २।६।१।१) |
| (३८) | रुहत्स्वाहा |
| (३५) | वयं देवस्य |
| (१५) | * विमृग्वरीं पृथिवीं ( अ० सं० १२।१।२९ ) |
| | ● विष्णोर्मनसा पूतासि |
| | ● विष्णोर्मनसा पूतेस्थ |
| (९) | * शिवेन मा (अ० सं० १।३३।४) |
| (४१) | शं स्वाहा |
| (६४) | स्वधिते मैनं |
| (५) | सत्येन त्वा |
| (१३) | सविष्टरमासनं |
| (६१) | * सूयवसाद् भगवती (अ० सं० ७।७३।११;९।१०।२०) |
| (२८) | सूर्यस्य त्वा (गो० ब्रा० २।१।२) |
| (४६) | सोममेतत् |
| (२२) | * संजीवा स्थ (अ० १९।६९।३) |
| (९) | * हिरण्यवर्णाः ( अ० १।३३।१ ) |

निर्देशः—* ताराचिह्नाङ्किता मन्त्राः कौशिकगृह्यसूत्रे न पूर्णतयोक्ताः। तेषां पुरतः संहितादिस्थलनिर्देशाः प्रदत्ताः। अन्यत्राप्युपलब्धमन्त्राणां तत्तत्स्थलान्युल्लिखितानि। कौशिकगृह्योक्तानां सौत्रमन्त्राणां पूर्वतः सूत्रपाठाङ्काः सन्ति। ● बिन्दुचिह्नाङ्किता मन्त्राः सूत्रानुक्ता अपि देवभद्रीयपद्धतावुल्लिखिताः।

—०—

# परिशिष्टम्--३

## ग्रन्थोद्धृतानां कतिपयपाश्चात्त्यविदुषां तिथ्यनुक्रमः

| पृष्ठाङ्काः | विदुषां नामानि | जन्म | अवसानम् |
|---|---|---|---|
| 11. | Sir William Jones | 1746 | 27-4-1794 |
| 11. | Henry Thomas Colebrooke | 1765 | 1837 |
| 13. | Eugene Burnouf ( Paris ) | 1801 | 1852 |
| 15. | Friedrich Max Muller (Oxford) | 6-12-1823 | 29-10-1900 |
| 16. | Rudolf Roth | 1821 | 1895 |
| 18. | Otto Bohtlingk (St. Petersberg) | 30-5-1815 | 1904 |
| 18. | Albrecht Weber ( Berlin ) | 1825 | 1901 |
| 21. | William Dwight Whitney ( New Haven ) | 9-2-1827 | 7-6-1894 |
| 23. | Alfred Ludwig ( Prague ) | 9-10-1832 | 12-6-1911 |
| 23. | Karl F. Geldner ( Berlin ) | 17-12-1852 | 1929 |
| 25. | Ralph T. H. Griffith | 25-5-1826 | 1906 |
| 26. | Arthur Anthony Macdonell ( Oxford ) | 11-5-1854 | |
| 31. | Sten Konow ( Oslo ) | 17-4-1867 | |
| 32. | Heinrich ( Friedrich ) Zimmer ( Berlin ) | 11-12-1851 | 28-7-1910 |
| 34. | Sylvan Levi ( Paris ) | 28-3-1863 | 30-10-1935 |
| 35. | Herman Jacobi ( Bonn ) | 1860 | 21-10-1937 |
| 36. | Moriz Winternitz ( Prague ) | 1863 | 8-1-1937 |
| 40. | Georg Buhler (Borstel, Hanover ) | 19-7-1837 | 16-4-1898 |
| 43. | Sir Edwin Arnold ( England ) | 10-6-1832 | 24-3-1904 |

| पृष्ठाङ्काः विदुषां नामानि | जन्म |
|---|---|
| 45. F. Otto Schrader ( kiel ) | 19-3-1876 |
| 46. Louis de la Vallee Poussin ( Bruxells ) | 1-1-1869 |
| 47. Johannes Hertel ( Leipzig ) | 13-3-1872 |
| 48. Walther Wust ( Munich ) | 7-5-1901 |
| 48. Kasteu Ronnow ( Upsala ) | 24-1-1897 |
| 50. Louis Renou ( Paris ) | 28-10-1896 |
| 50. Jean Przyluski ( Paris ) | 17-8-1875 |
| 51. Heinrich Luders ( Berlin ) | 25-6-1869 |
| 51. Jan Gonda ( Utrecht ) | 14-4-1905 |

